श्रीभारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्

# सूर्योदयः

[ संयुक्तविशेषाङ्कः ]

---


संरक्षिका

श्रीमती विद्यादेवीजी महो .ा

प्रबन्ध सम्पादिका

श्रीमती एस० बी० पाइ

सम्पादकः

डॉ० परमहंस मिश्रः

सहसम्पादकौ

डॉ० कपिलदेव पाण्

श्री श्यामबिहारी त्रिपाठी





वार्षिकमूल्यम्—९ रूप्यकाणि

[illegible]मूल्यम्—१ रूप्यकम्

वर्ष : १९७७

संयुक्तविशेषाङ्कः—जनवरी-जू

# अनुक्रमः





# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोह तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जात सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

संयुक्ताङ्कः

जनवरी–जून १९७७

५४ वर्षे ] वाराणसी आषाढ २०३४ वै० · जून १९७७ [ पूर्णसंख्या ५२४

## ❀ कतमां द्यां रश्मिरस्या ततान ❀

विसुपर्णो अन्तरिक्षाण्यख्यद्, गभीरवेपा असुरः सुनीथः।
क्वेदानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान॥
अष्टौ व्यख्यत् ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून्।
हिरण्याक्षः सविता देव आगाद् दधद्रत्ना दाशुषे वार्याणि

ऋ० मं० १ सूक्त ३५|७–८

शश्वत्सम्यक्तया विश्वस्मिन् विसरणशीलः प्रकाशरूपेषु सूक्ष्मातिसूक्ष्मेषु तरङ्गेषु सुविपुलं वेपमानः, सर्वेषामसूना प्राणाना प्रदायक, सुप्रकाशतया समीहितं देश समुन्नायक सूर्यस्य रश्मिः अनन्तान्तरिक्षोपलक्षितानि लोकत्रय-स्थानानि असामान्यतया प्रकाशितानि करोति। एतादृशरश्मिसवलितः सूर्यः सम्प्रति परमप्रकर्षपुष्कलपुष्करस्य कस्मिन्नशे प्रकाशराशि प्रसारयति—इति कथमपि न ज्ञातु शक्यते। प्रज्ञावता प्रकृष्टाः पारदृश्वानोऽपि रहस्यमेतज्ज्ञातुं न शक्नुवन्ति। दिवा कतमा सः अलंकरोतीत्यपि पारेप्रज्ञमेव प्रज्ञावताम्।

सविता देवः पृथिव्याः सम्बन्धिनीः अष्टौ [प्राच्याद्याश्चतस्रः आग्नेया-द्याश्चतस्रो विदिशः] दिशः सुप्रकाशिताः अकरोत्। स्वस्वभोगेन योजयितुन् त्रीन् लोकान्, सप्तसमुद्रांश्च प्रकाशयति। हितेन रमणीयेन चक्षुषा सवलित. दिव्य-शक्तिसम्पन्न. सविता हविर्दत्तवते यजमानाय वरणीयानि रत्नानि प्रयच्छन् शश्वत्परावर्तते।



# महर्षिज्ञानानन्दचरितम् महाकाव्यम्

—स्वर्गीया श्री विन्ध्येश्वरी प्रसाद शास्त्रिण —

## [द्वाविंशो सर्गः]

श्रुतिभाष्यमलौकिकाद्भुतं विबुधैर्लेखयते स्म कैश्चन ।
अपरैश्च स योगसंहिताः कतिभिर्दर्शनधर्मसंगतिम् ॥५१॥

विधिवत्स निजायुषोऽन्तिमान् दश चाब्दान् विधिनाऽमुना मुनिः ।
बहुशास्त्रविकासनात्मकैः पुरुषार्थैर्नयते स्म सर्वदा ॥५२॥

गुरुदर्शनकामनाश्रितम् अतिदूराच्च समागतं तथा ।
किमपि प्रतिबोध्य चेङ्गितैर्जनसम्मर्दमयं ह्युपेक्षते ॥५३॥

विविधैः श्रुतिशास्त्रचिन्तनैरथवा शुद्धसमाधिसेवनैः ।
समयोऽस्य मुनेर्निरन्तरं व्यतियाति स्म महातपस्विनः ॥५४॥

कृतकर्मकलापसंयमाद् अमुनाज्ञायत मृत्युवासर ।
वत मृत्युकरः स चामयोऽपि च तस्यास्त्यपरोक्ष एव हि ॥५५॥

स हि मूत्रनिरोधजामय सहसा प्रादुरभूत् किलैकदा ।
शुचिसात्त्विकभेषजेन तं शमयामास मुनीश्वरः स्वयम् ॥५६॥

बहुवारमिमं यतीश्वरं स किल व्याधिरपीडयत् परम् ।
निजभक्तचिकित्सकैर्द्रुतं सुखशान्तिं गमितः सदौषधैः ॥५७॥

प्रबलो निजमर्मपीडकः स च रोगः पुनरेकदोत्थितः ।
निजभाग्यविशारदो मुनिस्तमवैदात्मशरीरनाशकम् ॥५८॥

बहवोऽपि च सद्भिषग्वराः प्रथिता द्राक्तरशल्यकोविदाः ।
मुनिभक्तजनैः प्रयत्नतो द्रुतमानायिषुरस्य शान्तये ॥५९॥

सकलैः समुपागतैश्च तैर्निरणाय्यस्य तु सूचिभेदनम् ।
अपवित्रपदार्थसंक्रमं निजदेहे स हि नान्वमन्यत ॥६०॥

सम्पादकीयम्—

# शिक्षा कीदृशी स्यात्

मानवजीवन पदे पदे या सम्यगनुशास्ति, शिक्षितु वा शक्नोति सा शिक्षा। व्यष्टे समष्टेर्वा सांस्कृतिकसमृद्धिसमुपलब्धये शिक्षा अनिवार्या भवति। राष्ट्रे त्रिविष्टपवैशिष्ट्यसम्पादनाय सर्वेभ्य उत्तरोत्तरमुत्कर्षदिशः दर्शनाय या प्रभूततया पूर्णतया प्रभवति, या च न केवलं भौतिकविभूतिसभूतय एव, अपितु दिव्या दिवौकसा दीप्तिमत्ता सर्वत वितरितुं समर्था भवति—वस्तुत' सा एव शिक्षा भवति। शिक्षायाम् अनुशासनस्य सार्वात्म्येन स्वीकृति सर्वोपरि सुतरामपेक्ष्यते।

विचारकैरियं त्रिविधा कल्प्यते। प्रथमा तावत्—सामान्या, यया सामान्यतया साधारणजनता कचिद् विशिष्ट स्तर यावत् सानवशेषमधीत्य जीवनव्यापारान् अव्याहतं सपादयेत्। द्वितीया च वैशिष्ट्येन समाहितार्था बुद्धिवैशद्यसाधिका प्रत्यग्भवप्रावीण्यप्रभाप्रकर्षपरमार्थप्रतिबद्धा। तृतीया च परात्परता प्रापयन्ती सर्वातिशायितया परा परप्रकाशविमर्शपरायणा काप्यनिर्वचनीयस्वरूपा।

भारतवर्षे प्राक्तनयुगान्तरेषु सुदूरातीतवैदिकपौराणिककालेषु शिक्षाया' का व्यवस्थासीत् इत्यनुयोगस्य सम्यगुत्तर श्रुतयः सर्वोपनिषदश्च ददति। श्रोत्रिया. ब्रह्मनिष्ठा' विद्वासः आचार्यवर्या जीवनस्य सर्वोच्चैस्तरा दशा दिशन्त, सर्वमान्यसार्वभौमसनातनसिद्धान्तान् प्रोच्चिचालिषया ब्राह्मणेषु गृह्यसूत्रेषु स्मृतिषूपनिषत्सु पुराणेषु धर्मग्रन्थेषु च भारतीयजीवनदर्शनपद्धतिं गुरुतयाऽजाग्रन्थिषत।

तदानी नासीत् मानवजीवने वैविध्यमेतादृक्। प्रकृते पुण्य पुष्कल परिवेषं पारिशेष्यतः स्वीकुर्वन्तः तदानीतना जना सामान्यतयैव शान्तशेमुषीका. अन्ये परब्रह्मणि च निरता ब्राह्मणा आसन्।

साम्प्रतिके युगे जीवनपद्धतौ पूर्णतया पाश्चात्यप्रथाऽथनम् समुपबृंहितं दृश्यते। स्वभावत एव सामाजिकसमुत्कर्षसर्जकानां विदुषां राजनेतृवर्याणा

शासकाना च मनसि चिन्ता समुदेष्यत्येव—कीदृशी शिक्षा प्रणाली सम्प्रति परिचाल्येत !

अधुना चतुर्दिक्षु समुद्घोषः वर्त्तते शिक्षापद्धतिविषये। समाचारपत्रेषु आकाशवाणीषु दूरदर्शनेषु च शिक्षापद्धतिविषये बहवो विद्वांस स्वीयानि मन्तव्यानि नित्य प्रकाशमाना चकासन्ते। नगरेषु सम्मेलनानि नियोजितानि सन्ति। उच्चैस्तरीयासु वार्त्तासु विवदमाना वादकाः वादे वादे जायते तत्त्वबोध इति नीत्या शिक्षातत्त्वमधिगन्तु समीहन्ते।

'वुड' 'सेडलर' 'राधाकृष्णन्' 'मुदलियार' प्रभृतिभि शिक्षातत्त्वविद्भिः विद्वद्भिः प्राक्प्रस्तावितानि शिक्षासम्बन्धीनि मन्तव्यानि यथाकथमपि अशत रूपान्तरमपि स्वीकृत्य अद्यावधि माध्यमिकस्तरेषु व्यवहृतानि सन्ति किन्तु वर्त्तमाने सन्दर्भे अपर्याप्तानि तानि नितरामनुभूयन्ते। अतएव कोठारी-आयोगेन सम्प्रति परिचालिता १० + २ + ३ इति सकेतप्रकेता परिपाटी केषुचित् प्रान्तेषु प्रचलिता, केषुचित्प्रचालनार्थं प्रस्ताविता केषुचिच्च सम्प्रत्यपि विमृष्टव्या विद्यते। अत इयमपि सन्देहदोलाधिरूढा न निश्चप्रच स्वरूप सम्प्राप्तु साम्प्रतमपि प्रभवति। अस्या सरणौ मातृभाषा—हिन्दीभाषा—आंग्लभाषारूपत्रिभाषा-माध्यमेन पठितु पाठयितु बल दत्तमस्ति। प्रश्नः जागर्ति—कथ सा भाषा यस्या शिशवः तुतलायन्ते-सा पठनपाठने प्रभविष्यति ? कियन्ति च काठिन्यानि पुस्तकादिसम्बन्धीनि च समुपस्थितानि भविष्यन्ति भविष्ये इति विचारणीयो विषयः। वस्तुतः या भाषा मातृवत् प्रजातन्तून् सङ्ग्रथ्य समाजरचनायां वात्सल्य नियोजयति सा एव भाषा मातृभाषा। इति दृष्ट्या अस्माकं राष्ट्रभाषा हिन्दी तस्याः जननी संस्कृतमेव च मातृभाषारूपेण स्वीकार्ये स्त.। काम पञ्चमी-कक्षापर्यन्तम् शिशवः शिशुभाषया विषयान् अवगच्छन्तु पठन्तु किन्तु तदुपरि केवल राष्ट्रभाषामाध्यमेन समग्रे भारतवर्षे शिक्षा प्रचलिता भवेत्। सम्पर्क-भाषा सस्कृतं स्यात्। हिन्दीभाषातिरिक्त येषु प्रान्तेषु तत्रत्या भाषाः विभाषाः वा समृद्धतया व्यवहृताः सन्ति तत्र तत्र तत्रत्यासु विभाषासु पाठनं भवेत्। तत्रापि द्वितीया भाषा सस्कृत स्यात्।

मातृभाषाया नूतनहस्तनीया कूटदृष्टिः सत्वरमेवापसर्तव्या । विभाषा + संस्कृतभाषासहयोगेन दशवर्षीया शिक्षा दातव्या । अनेन सर्वे भारतीया छात्रा सम्यग्रूपेण समानयाकृत्या समस्तरा साम्यभावसवर्द्धिका शिक्षा प्राप्नुयु । एतेन तेषु भावैक्यमपि स्थापयिष्यते । दशवर्षीयेऽस्मिन् विद्यालयीयाध्यापनाध्ययने आग्लभाषायाः गलहस्तनमावश्यकम् ।

व्यवसायीकरणदृष्ट्या द्विवार्षिके पाठ्यक्रमेऽपि राष्ट्रभाषाया विभाषाया माध्यमेनैव शिक्षण दीक्षा चावश्यकीये । व्यावसायिकशिक्षणार्थं यावन्त विषयाः परिगृहीता सन्ति ते तु राष्ट्रसमृद्धिदृष्ट्या सुविचार्यैव सुनिर्धारिता सन्ति । एतत्स्तरे सम्बन्धिन. व्यवसायस्यैवानिवार्यत प्रावीण्य स्यात् इत्यप्यवधेयम् भविष्यति । एते दीक्षिताः व्यवसायव्यापारसभरणनैपुण्यनिष्ठिताः अध्येतारः देशे समग्र व्यवसायसमूह प्रवक्ष्यन्ति, राष्ट्र समृद्ध च करिष्यन्तीति शोभनम् भविष्यति ।

ये केचन व्यवसायविद्यापराङ्मुखतया विशुद्धसाहित्यिकविचारधारया समेधमानाः छात्रा स्युस्तेऽस्मिन् द्विवर्षीयस्तरे वैकल्पिकरूपेणान्ताराष्ट्रियायाः कस्याश्चिदपि भाषाया अध्ययन पूरयेयु । अनुमानत द्विवर्षीयेऽस्मिन् स्तरे ४०% तः ५९% पर्यन्तम् मध्यमश्रेणिगा छात्रा. श्रमिकत्वेन समायोज्याः भविष्यन्ति । शिष्टा ६०%त उपरितना प्रातिभा विभामवविभासयिषव छात्रा ये वैज्ञानिकदार्शनिकसाहित्यिकशिक्षाया अभीप्सव भविष्यन्ति, तेषा पृथक् व्यवस्था त्रिवर्षीये स्तरे करणीयैव ।

एते ६०% त ऊर्ध्वम् प्राप्तलब्धाङ्का. अध्येतार. विश्वविद्यालयस्तरीयां शिक्षा स्वीकुर्युरिति ध्रुवमविवादास्पद एव विषयः भविष्यति ।

अनेन व्यवस्थापनेन सर्वत्र पक्षपातरहिता सरणी स्वतोऽनुसर्त्तव्या भविष्यति । एवम् १० वर्षीये स्तरे द्विवर्षीये स्तरे च या शिक्षा भविष्यति, सा उभयत्रसामान्यजनसमृद्धिसमीहया पर्याप्ता भविष्यति । तृतीये स्तरे च विद्वांसः शिक्षका निर्मास्यन्ते, ये समाजसञ्चालनदक्षाः विविदपवत मातृभूमिसेवासाधकाः सांस्कृतिकमुत्कर्षं साधयिष्यन्ति च । एव चेत् परिचाल्येत १० + २ + ३ पद्धतिः

तर्हि देशस्य कल्याणं भविता । एवं कारणेन अनेन व्यवस्थापनेन सर्वत्र पक्षपात-रहिता पद्धतिः स्वतः अनुसर्त्तव्या भविष्यति । समाजस्य राष्ट्रस्य च अनन्तानन्तसेवायोजनेषु शिक्षिता दीक्षिता विद्वांसश्च ग्रामे ग्रामे नगरे नगरे संस्थिताः परिवाररूपिणं परमात्मानं सेविष्यन्ते । सामान्या शिक्षिता माध्यमिकस्तरीया श्रमिका विविधापेक्षितापूर्तिव्यापारे व्यापृता राष्ट्रं सभरिष्यन्ति, सर्वे च संस्कृतज्ञा सन्तः संस्कृतिं च परिचिन्वन्तः सम्यगाचरिष्यन्ति । उच्चस्तरीया उत्तमाः साहित्यिका दार्शनिका वैज्ञानिकाश्च सम्यगधीत्य विश्वस्मिन् भारतस्य विभा भासयेयुः ।

अनया रीत्या सम्प्रति विविधसमस्यासमाधानसङ्कनेऽर्थदृष्ट्या च रिक्तस्यूते देशे किमप्यधिकं काठिन्यं च नापतिष्यति । वर्त्तमानैः शिक्षकैरेव समस्ता व्यवस्था व्यवस्थिता भविष्यति ।

सूर्योदयः सर्वत्र देशे शिक्षाक्षेत्रे संस्कृतशिक्षणं वाञ्छति । संस्कृतविषये दक्षिणोत्तरसम्बन्धिनी न कापि सविवदिषा वर्त्तते । प्रसङ्गेऽस्मिन् दाक्षिणात्याः औत्तराः आङ्ग्लवर्गातिनश्च भारतीयाः बन्धवः सविनयमनुरुध्यन्ते शश्वद् विचारणाय, यत् भगवतः लीलास्थली, इयं भरतभूः, सामगानेनापूरितवायुमण्डलोपवनोद्यानेयं ऋषिदृष्टा धरणी, यशोनिनदनादिनेयं वृन्दावनरामेश्वरवेंकटेशविराजिता भगवद्भूमिः कथं वैदेशिकदूषितशब्दजालैरापूरिता स्यात् ? भारतीयताविरोधिनीयं खीष्टोत्पन्नाङ्ग्लभाषा कथमत्र स्वेच्छं प्रचलेत् ? नास्याः अस्मिन् देशे काप्यावश्यकता ? संस्कृतस्य १० + २ + ३ प्रणाल्या समायोजनेन सर्वं शोभनमेव भविष्यतीति शम् ।

---

**प्रस्तुतसंयुक्ताङ्कसूचना—**

विगतकर्ममीमांसादर्शनविशेषाङ्कप्रकाशनानन्तरं १९७३ वर्षीयस्य जनवरी-मासादारभ्यजूनमासावधेः सम्पूरकोऽयं संयुक्ताङ्कः भवतां करारविन्देषु सम्प्रति शोभतेतमाम् । षट्कामसमृद्धेऽस्मिन् कर्ममीमांसादर्शनस्य क्रियापादः आंशिकतया प्रकाश्यते । पश्चात्प्रकाश्यमानेष्वङ्केषु च क्रमशः क्रियापादमोक्षपादयोश्च प्रकाशनम् भविता ।

# * वन्दनम् *

श्री विनयो मिश्रः
( का० हि० वि० वि० )

(१)

ब्रह्माण्डमेतत्खलु नाट्यमच,
पात्राणि सर्वेऽखिलजीवसंघा ।
यन्मायया नृत्यति विश्वमीडे,
तं देवकीनन्दनसूत्रधारम् ॥

(२)

क्वचित्तु बृन्दावनकेलिकुञ्जे,
क्वचिद्यशोदागृहचत्वरे च ।
क्वचित्तु वीथ्या सुविहारशीलौ,
कृष्णाङ्घ्रिपद्मौ मनसा स्मरामि ॥

( ३ )

वन्दे वृन्दावनाधीशमिन्दिरानन्दमन्दिरम् ।
गोविन्द गोपगोपीना वदिताङ्घ्रि व्रजेश्वरम् ॥

( ४ )

सुधाधारा राधा शशधरशुभा शुभ्रवसना,
नवीना नम्राङ्गी सरलहृदया रुक्मरुचिरा ।
रमा मुग्धा धन्या युगलवलयक्वाणरणिता,
तमालाङ्के क्रीडत्तरलितदृशा सास्तु सुखदा ॥

( ५ )

स्फुरत्क्रीडाकुञ्जे कलितकदलिश्रेणिहरिते,
कदम्बे शाखाया रचितवरहिन्दोलपटले ।
लसन्तं सानन्द ललितललितान्दोलितयुग,
द्विधामूर्त्तीभूत परमरसमेक हृदि दधे ॥

( ६ )

राधिका नौमि गोविन्द-स्नेहाम्भोधिमरालिकाम् ।
चिन्वन्ती शाश्वत कृष्ण-लावण्यामृतमौक्तिकम् ॥

( ७ )

कामये केवलं शश्वत् कृष्णलीलानुकीर्त्तनम् ।
चिन्तनं स्मरणं ध्यान वन्दनं चरणार्चनम् ॥

# —: विमर्शः :—

डॉ० श्री परमहंस मिश्रः

का संसृतिः ? द्वैतपरम्परा या, भावात्मिका वृत्तिरिदंप्रधाना ।
मोक्षो हि कः ? संविदि संकुलायाः वृत्तेर्दृढः नित्यनवो विमर्शः ॥१॥

चितेः प्रकाशात्मतया प्रसारे, सादाशिवे विश्वमये विकासे ।
विभाति चैतन्यतनौ विताने, क्रियाप्रकर्षे विविधो विमर्शः ॥२॥

कोऽयं जडः ? केन प्रकासतेऽयं विचित्रचाकित्यविचारमुग्धः ?
इत्यस्य चिन्तां प्रकरोति नित्यं, यदा पशुः तस्य शुभो विमर्शः ॥३॥

माहेश्वरे शैवमहास्वभावे, प्रवेशजाह्लादरसामृतस्य ।
महाह्रदीयामरविन्दशोभां, प्रकाशरूपां वितरेद् विमर्शः ॥४॥

माहेश्वराद्वैतपरात्मरूपे, स्वातंत्र्यसंवित्तिरसे प्रकाशे ।
पीयूषपूर्णार्णववारुणीये, चिच्चर्वणे संविकसेद्विमर्शः ॥५॥

तारङ्गमातङ्गमहाविहारे विगाह्यमानेन मया रसाब्धौ ।
उल्लासितश्चिन्तनचेतनायाश्चमत्कृतेरर्चिषि चिद्विमर्शः ॥६॥

शक्तेः शिवस्यामृतसामरस्ये प्रोद्भासिते स्वान्तमहाप्रकाशे ।
विभाति विश्वात्मविभाविलासे, रसान्विते कोऽपि शुभो विमर्शः ॥७॥

यत्किञ्च सम्यग्व्यवहारयोग्यं, सम्पादयामि श्वसिमि ब्रवीमि ।
यदाचरामि प्रकरोमि सर्वं, तन्मे शिवस्योल्लसितो विमर्शः ॥८॥

शुभाशुभं कर्मफलप्रधानम् इदन्तया विलग्नमहंत्वलिप्तम् ।
समीक्षितुं यत्नकृता मया यज् ज्ञातं तदासीन्ननु चिद्विमर्शः ॥९॥

बोधद्रुमे विकसिते नु परात्मिकायाः,
वाचः विलासपरिदर्शनसक्षमाणाम् ।
वर्णात्मनां कुसुमकल्पकलाकृतीनां,
शोभा विभाति परितो मुदितो विमर्शः ॥ १०॥

# "हरियाणाप्रदेशे संस्कृतशिक्षायाः विकासः"

डॉक्टर रामदत्त शर्मा, एम्० ए०, पी-एच्० डी०
संस्कृत प्राध्यापक, राजकीय महाविद्यालय, महेन्द्रगढ़
( हरियाणा )

शिक्षायाः क्षेत्रे देववाण्याः संस्कृतस्य विशिष्टं स्थानं वर्तते। भारते पञ्चनदोत्तरप्रदेशराजस्थानमद्रासमैसूरराज्यैः सह हरियाणाप्रान्तस्य संस्कृत-शिक्षणक्षेत्रे महत्त्वपूर्णं योगदानं वर्तते !

हरियाणाप्रदेशे संस्कृतशिक्षायाः प्रचार-प्रसारौ अत्यन्तं प्राचीनौ स्तः। प्राचीनकाले संस्कृत-शिक्षा सम्पूर्ण-राज्ये प्रचालिता आसीत्। संयुक्तपञ्चनद-हरियाणाप्रदेशे संस्कृतस्य वृहत् सर्जनं सञ्जातम्। पश्चाद्वर्तिनीषु कतिपय-शताब्दीषु हरियाणा-प्रान्ते सर्वविधा काव्यरचना सञ्जाता।

स्वातन्त्र्योत्तरकाले हरियाणाप्रान्ते संस्कृतशिक्षायाः समुचितो विकासो दृश्यते। १९५८ वर्षे नाभाभवने संस्कृतभाषायाः सर्वप्रथमं विश्वविद्यालयः कुरुक्षेत्रनगरे स्थापितः। तस्य संस्थापकाः श्री गौरीशङ्कर महाभागा आसन्। तदनन्तरं विश्वविद्यालयोऽयं 'कुरुक्षेत्र-विश्वविद्यालयः' इति नाम्ना प्रसिद्धः अभवत्॥ मूलरूपेण अस्य विश्वविद्यालयस्य स्थापना संस्कृतविश्वविद्यालयस्य नाम्ना कृता॥ समयान्तरे विश्वविद्यालयेऽस्मिन् अन्ये आधुनिका विषया अपि पाठ्यक्रमे सम्मिलिताः। अधुना अस्य विश्वविद्यालयस्य हरियाणाप्रान्तस्य भूतपूर्वराज्यपालानां श्री वीरेन्द्र नारायण चक्रवर्ति–महाभागानां स्मृत्यां 'वीरेन्द्र नारायण चक्रवर्ती विश्वविद्यालयः' इति नामकरणं कृतम्। अस्य विश्वविद्यालयस्योपाधिपत्राणि संस्कृताङ्ग्लभाषयोः प्रदीयन्ते।

अधुना वीरेन्द्रनारायण चक्रवर्ती-विश्वविद्यालयस्य संस्कृतविभागे द्वौ आचार्यौ, त्रयः प्रवाचकाः, चत्वारः प्राध्यापकाश्च अध्ययनाध्यापनकार्ये संलग्ना वर्तन्ते। डॉ० गोपिकामोहनभट्टाचार्यमहाभागाः संस्कृतपालिविभागाध्यक्षस्य पदम् अलंकुर्वन्ति। डॉ० श्री निवासशास्त्रिमहाभागाः संस्कृतस्य दयानन्दप्रोफेसरस्य पदमलंकुर्वन्ति। विगतसत्रे अष्टसंख्याकाःशोधार्थिनः विश्वविद्यालयस्य संस्कृतविभागान्तर्गताः शोधकार्येषु संलग्ना बभूवुः। १९७६ तमे वर्षे दीक्षान्त-समारोहे एकः शोधछात्रः एका च शोधछात्रा पी-एच्० डी० उपाधिं प्राप्नुताम्। १९७५-७६ तमे सत्रे विभागेस्मिन् ६८ विद्यार्थिनः पठन्ति स्म। तेषु एकत्रिंशच्छात्राः प्रथमवर्षेऽध्ययनरता आसन्। द्वितीयवर्षे सप्तत्रिंशत् छात्रा आसन्। तेषु दश साहित्यवर्गे चतुर्दश च दर्शनशास्त्रवर्गे, दश व्याकरणवर्गे, त्रयो वेदवर्गे च अध्ययनं कुर्वन्ति स्म। विश्वविद्यालयेऽस्मिन् 'संस्कृतप्रमाणपत्र' पाठ्यक्रमोऽपि प्रचलति।

विश्वविद्यालयेन विगतवर्षे अखिलभारतीयप्राच्यविद्यासम्मेलनस्य सप्तविंशतितमो महोत्सवः सम्यक्प्रकारेण संचालितः। सम्मेलनेऽस्मिन् सहस्रसंख्यकाः प्रतिनिधयो विचारका विद्वांसश्च समायाताः। डॉ० गोपिकामोहनभट्टाचार्यमहोदयः अस्य सम्मेलनस्य व्यवस्थापकसचिवपदे प्रतिष्ठित आसीत्। अस्य विभागस्य अध्यक्षपदे सर्वकारेण लब्धप्रतिष्ठाः पं० स्थाणुदत्तमहाभागाः समासीनाः। संस्कृतविभागस्य समग्राणां सदस्यानां पूर्णसहयोगेन तत् सम्मेलनं सफलमजायत।

'वीरेन्द्र नारायण चक्रवर्ती' विश्वविद्यालयान्तर्गतं सम्बद्धेषु महाविद्यालयेषु राष्ट्रभाषया (हिन्दी) सह संस्कृतमपि अनिवार्यविषयरूपेण प्राग्विश्वविद्यालयकक्षायाः प्रारम्य स्नातकीयतृतीयवर्षपर्यन्तं पाठ्यते। संस्कृतम् ऐच्छिकविषयरूपेणापि पाठ्यते।

आधुनिकशिक्षणसंस्थास्वपि संस्कृतविषयस्याऽध्यापनव्यवस्था वर्तते। वर्तमाने समये द्वौ विश्वविद्यालयौ, एकः कुरुक्षेत्रे वीरेन्द्रनारायण चक्रवर्ती विश्वविद्यालयः अन्यः च रोहतकनगरे रोहतक–विश्वविद्यालयः कार्यशीलौ स्तः।

एकोत्तरशतं स्नातकस्तरीयेषु महाविद्यालयेषु तथा च १०८६ उच्चमाध्यमिक-विद्यालयेषु छात्रछात्राः संस्कृताध्ययने रता वर्तन्ते ।

प्रान्तेऽस्मिन् पारम्परिकसंस्कृताध्ययनार्थमनेके महाविद्यालयाः प्रचलन्ति । कुरुक्षेत्र-कनीना (महेन्द्रगढ) भैंसवाल (सोनीपत) झज्झर (रोहतक) पाटोदी (गुडगाँव) गधपुरी (गुडगाँव) बधौला-गुडगाँव, रेवाड़ी (महेन्द्रगढ) जुलाणामण्डी (जींद) घरौंडा (करनाल) प्रभृतिषु शास्त्रिस्तरीयाः संस्कृतमहाविद्यालयाः सन्ति । भिवानीनगरे साम्प्रतमेव एकस्य राजकीय-संस्कृत-महाविद्यालयस्य स्थापना संजाता ।

हरियाणाप्रान्ते काव्यरचनाविषयेऽपि प्रगतिर्दरीदृश्यते । कुरुक्षेत्र-संस्कृत महाविद्यालयस्य भूतपूर्वप्राध्यापकेन पं० बालकृष्णशास्त्रिमहोदयेन 'अरविन्द-काव्यम्' रचितम् । काव्यमिदमपूर्णम् । पञ्चनदविश्वविद्यालयस्य प्रोफेसरमहाभागेन डॉ० रामगोपालमहोदयेन वैदिक-व्याकरणविषये महत्वपूर्णो ग्रंथो लिखितः । कौल ( कुरुक्षेत्र ) ग्रामस्य स्व० पं० मध्वाचार्यमहोदयः 'शास्त्रार्थ-महारथी' इत्युपाधिना प्रसिद्ध आसीत् । केनापि शास्त्रिमहादयेन बारणाग्रामे आधुनिकसूत्रात्मकव्याकरणम् लिखितम् ।

पं० कन्हैयालालशास्त्रिमहाभागेनैका समस्यापूर्तिप्रतियोगिता आयोजिता' यस्यां सम्पूर्णभारतस्य विद्वांसः समायाताः 'सत्यं परं धीमहि' इति समस्यायाः पूर्तिः शास्त्रिमहोदयेन सम्यक् प्रकारेण कृता । तदीया रचना पुरस्कृता बभूव ।

हरियाणा-सर्वकारेण संस्कृतशिक्षायाः विकासार्थं कुरुक्षेत्रस्थ उद्भटो विद्वान् पण्डितस्थाणुदत्तशास्त्रिमहाभागः तथा च कुरुक्षेत्र-विश्वविद्यालयस्य-बहुभाषा-विभागस्य डॉ० जगदेव सिंह—महाभागः संस्कृतक्षेत्रे योग्यताप्रदर्शनेन न केवलं 'विशिष्टौ विद्वांसौ' इति स्वीकृतौ, अपितु पुरस्कृतौ च । हरियाणा-प्रान्तस्य संस्कृतज्ञेषु विद्वत्सु पं० कन्हैयालालशास्त्रिणः, आचार्यभगवान्देवः, पं०-चारुदेवशास्त्री, पं० मोहनलालशास्त्री, पं० रामनारायणशास्त्री, पं० मुरारी लाल शास्त्री, पं० सीतारामशास्त्री, पं० रामनारायणशास्त्री, पं० स्थाणुदत्त-शास्त्री, पं० हुकुमचन्दशास्त्री चेत्येते विशिष्टरूपेण गण्यन्ते ।

शोधकार्यम् :—सम्पूर्णराज्ये द्वाविंशतिसंख्याकाः शोधार्थिनः शोधकार्ये संलग्ना वर्तन्ते। सर्वे एव ते विश्वविद्यालयस्य "पी-एच्० डी०" इत्युपाधिं प्राप्तुं प्रयतन्ते। 'वीरेन्द्रनारायण चक्रवर्ती'—विश्वविद्यालये अस्मिन् वर्षे त्रयः संस्कृतज्ञाः पी-एच्० डी० इत्युपाधिना समलङ्कृताः।

महेन्द्रदुर्गस्य—राजकीय-महाविद्यालयस्य संस्कृतप्राध्यापकेन डा० एन० आर० भारद्वाजेन पञ्चनदविश्वविद्यालयात् शंकराचार्यस्य मुक्तीनां विश्लेषणात्मकाध्ययनविषये पी-एच्० डी० उपाधिः प्राप्तः। अस्मिन्नेव महाविद्यालयस्य संस्कृतप्राध्यापकपदे कार्यरत एषः लेखकः "राजस्थान संस्कृतैतिहासिक—महाकाव्येषु समाजचित्रणमिति विषयमङ्गीकृत्य "डी० लिट्"—उपाधिसंप्राप्त्यै शोधकार्ये संलग्नोऽस्ति।

राजस्थानविश्वविद्यालयेन तु पूर्वमेव अस्मिन् विषये शोधग्रंथलेखनार्थं स्वीकृतिः प्रदत्ता। 'वीरन्द्रचक्रवर्ती' विश्वविद्यालयस्य अनेके आचार्याः प्रवाचकाः प्राध्यापकाश्च शोधकार्येषु संलग्नाः सन्ति। विभागीयप्राध्यापकस्य डॉ० परमानन्दगुप्तमहोदयस्य "प्राचीनभारतीयेषु अभिलेखेषु भूगोलः" इत्यं शोधप्रबन्धो दिल्लीतः प्रकाशितः।

पत्रकारितायाः क्षेत्रे हरियाणासर्वकारस्य चण्डीगढनगरस्थ—भाषा विभागस्य 'सप्तसिन्धु' इति नाम्न्यां पत्रिकायां संस्कृतानुभागः प्रतिमासं प्रकाश्यते। 'वीरेन्द्रनारायणचक्रवर्ती' विश्वविद्यालयेन अपि 'प्राची ज्योतिः' नाम्नी पत्रिका वार्षिकरूपेण प्रकाश्यते।

रङ्गमञ्चक्षेत्रेऽपि 'वीरेन्द्र नारायण चक्रवर्ती' विश्वविद्यालयस्य संस्कृत-विभागान्तर्गतं अभिज्ञानशाकुन्तलम् मालविकाग्निमित्रम् मुद्राराक्षसम् दूतवाक्य-मित्यादीनां नाटकानां कानिचिद् दृश्यानि च प्रदर्शितानि।

इत्थं हरियाणाप्रान्ते संस्कृतशिक्षा सम्यक्तया विकासमाना विद्यते।

# 'विदेशेषु संस्कृतं तत्प्रचारश्च'[1]

—डॉ॰ कपिलदेव पाण्डेय :
एम्० ए०, पी एच्० डी०, सं० प्रवक्ता, आ० म० डिग्रीकालेज, वाराणसी

कार्यालयस्यास्य सार्वभौमत्वं साधयन्तः सार्थकयन्तश्च विविधेभ्यो देशेभ्यो विदेशेभ्यश्च समागताः विद्वांसोऽत्र विराजन्तेतमामिति महतः प्रमोदस्यावसरोऽस्माकं समेषां संस्कृतोपस्कृतान्तःकरणानां कृते। विश्वस्य नैकेषु देशेषु चिरकालादेव संस्कृताध्ययनं तत्सम्बद्धं शोधकार्यं च प्रचलति, वैदेशिकैः संस्कृतानुरागिभिः संस्कृतविद्याविकासाय प्रभूतोऽद्भुतश्च श्रमो विहितः इति नाविदितं प्राच्यप्रतीच्यविचारचतुराणां प्रेक्षावताम्। विदेशेषु संस्कृतप्रचारविचारो द्विधा विभज्य कर्तुं शक्यते। प्रथमे भागे इंग्लैण्डामेरिकाप्रभृतयः पाश्चात्याः देशाः द्वितीये भागे च श्रीलङ्का-चीन-जापानप्रमुखाः प्राच्याः देशाः सन्निवेशयितुं शक्यन्ते।

पुरा किल ब्राह्मणधर्मस्य श्रमणधर्मस्य च यत्र यत्र प्रचारः प्रसारो वा अभवत् तत्खलु संस्कृतभाषामाध्यमेनैव। एशियाभूमिषु पारेसमुद्रं जापानादिषु देशेषु च बौद्धैः स्वधर्मप्रचारपरैः संस्कृतं सम्यक् प्रचारितम्। शैववैष्णवमतप्रसारपरायणैः ब्राह्मणैरपि दक्षिणपूर्वेशियाभागे संस्कृतक्षितिज विस्तारे महान् यत्नो विहितः। चम्पा-कम्बोडिया-इण्डोनेशियासु खैस्ततृतीयशतकात् खैस्तत्रयोदशतकपर्यन्तावधेः सहस्राधिकाः काव्यशैलीशीलाः शिलालेखाः समुपलब्धाः सन्ति। तासु भारतीयानां ब्राह्मणानामागमनस्योल्लेखो विद्यते। तत्र क्वचित् क्वचित्

---

१. सार्वभौम संस्कृत-प्रचार-कार्यालयस्य रजतजयन्तीसमारोहाङ्गभूतायां क्रमप्राप्तायां 'विदेशीय-संस्कृत-प्रचार-सम्मेनम्' इत्याख्यायां संगोष्ठ्यां १४-२-७७ दिनाङ्के सायमुपस्थापितोऽयं निबन्धः। एतल्लेखकस्य संयोजकत्वे आयोजितायां तस्यां (संगोष्ठ्याम्) प्रथितयशस्काः डॉ० हजारीप्रसादद्विवेदिमहाभागाः अध्यक्षाः, इंग्लैण्डदेशीयाः श्री आर्० एच्० हुक्रमहोदयाः समुद्घाटकाश्चासन्।

वैदिकाः सन्दर्भाः अपि मिलन्ति। बाली-जावा-इण्डोनेशियासु शैवमतानां वैष्णवमतानाञ्च संस्कृतपाठाः पाण्डुलिपिरूपेण सुरक्षिताः सन्ति। साम्प्रतं तेषां कश्चित् प्रयोगो नास्ति। चम्पा-कम्बोडिया-बर्मा-थाईलैण्ड-लाओस-मलयेशिया-इण्डोनेशियादेशानां लोकभाषासु संस्कृतशब्दाः पुष्कलतया प्रविष्टाः सन्ति। श्रीलङ्कादेशस्य संस्कृतेः स्वरूपनिर्धारिके द्वे एव—संस्कृतं पालिश्च। संस्कृतनिबद्धाः बौद्धदर्शनग्रन्थाः तद्व्याख्याश्च श्रीलङ्कायां साहित्यिक-संस्कृत-संरम्भस्य प्रथमप्रयत्नत्वेन स्वीक्रियन्ते मनीषिभिः। धार्मिकविरोधग्रस्तमपि संस्कृतं तत्र लौकिकज्ञानाय अपरिहार्यं, यतः सिंहलीभाषाशब्देषु संस्कृतशब्दाः अविभाज्यत्वेन सन्निवेशं गताः। संस्कृतस्य उच्चाध्ययनाय १८७३ तमे वर्षे कोलम्बोनगरे १८७५ तमे वर्षे केलानियानगरे च पिरीवेणयोः स्थापना कृता। तकनीकिनां-विषयाणामध्ययनस्य विकासं लोकप्रियतां च प्राप्तत्वात् सम्प्रति संस्कृताध्ययनं किञ्चिदवरुद्धं विद्यते, किन्तु इदं कारणन्तु विश्वस्मिन्नपि विश्वे समानरूपेण व्याप्तं विद्यते।

पञ्चदशशतकात् मङ्गोलदेशीयानां साहित्यिकजीवने तद्भाषासु च त्रैविष्टपः प्रभावः प्रारब्धः। स च संस्कृतशब्दानां समावेशमाध्यमेनैवेति सुस्पष्टम्। अनेकाः संस्कृतकृतयः तुर्किस्तानस्य पूर्वभागे सम्प्राप्ताः सन्ति। संस्कृतभाषायाः शब्दजातं संगृह्य, स्वशब्दावल्याः समुपबृंहणं कृत्वा च मङ्गोलभाषा क्रमशः आध्यात्मिकविचाराभिव्यक्तये समर्था जातेति भाषाविद्भिरनुभूयते। भारतेरानयोः सांस्कृतिकस्य सम्बन्धस्य एकः प्राचीनः इतिहासो वर्तते इति सुतरां पुष्यति अवेस्ताध्ययनाय संस्कृताध्ययनस्यापरिहार्यत्वम्। ईरानीसाहित्ये अरबीसाहित्ये च भारतीयकथासाहित्यस्य तत्रापि पञ्चतन्त्रस्य महत्त्वपूर्णः प्रभावोऽपि तदर्थं प्रस्तोतुं शक्यते। गणितविषये तु अरबदेशाः भारतस्य अधमर्णतामेव वहन्ति।

जापानदेशे षष्ठशतके चीनीभाषायामनुवादमाध्यमेन बौद्धग्रन्थाः प्रविष्टाः। तेषु ब्राह्मणसाहित्यस्य मुख्यतया जातकेषु अवदानेषु च पौराणिककथासूत्रस्यापि सन्निवेशः आसीत्। चीनीभाषायाम् अनूदितं रामायणं जापानदेशमपि गतम्।

तस्य प्रभावोऽपि प्रभूततया संगीते, नृत्ये, छायानाटके अन्यासु कलासु चापतितः सम्प्रत्यप्यवलोक्यते। महाभारतस्य कश्चिदल्पीयान् अंश एव तत्र प्रसृतः महत्त्वात् कथाजालस्य जटिलत्वाच्च। महाभारतकथाः उपजीव्य विविधानि नाटकानि अनेके नृत्याभिनयाश्च उपस्थाप्यन्ते। प्रत्यग्रतया संस्कृताध्ययनं जापानदेशे पुनः सप्तदशशतके प्रारब्धम्। १८७९ तमे वर्षे टोकियो-विश्वविद्यालये ताम्भन्-हारामहोदयेन बौद्धाध्ययनव्याख्यानक्रमरूपेण भारतीयविद्याध्ययनमुपक्रान्तम्। १९०४ तमे वर्षे ताकाकासुमहोदयस्तत्र प्राध्यापकपदमलङ्कृतवान्। साम्प्रतं नाकामुरामहोदयास्तत्र विराजन्ते।

रूसदेशस्यापि भारतीयविद्याः प्रति महती रुचिरा रुचिरासीत् क्रमशः समेधमाना च सावलोक्यते। स्वकृतिषु प्राचीनं भारतीयदर्शनम्, संस्कृतेः धर्मस्य चेतिहासं, वाग्विज्ञानञ्च वर्णयन्तो मीनायेव-शेरबात्स्की-ओल्डेनबर्ग-प्रभृतयो मनीषिणो नैव विस्मर्तुं शक्यन्ते। तत्र 'ओरिएण्टल् लैंग्वेजेज इंस्टीट्यूट् ऑफ् मास्को', ओरिएण्टल् फैकल्टी आफ् दि लेनिनग्राद्', 'ओरिएण्टल् स्टडीज आफ् दी उजबेक एकेडेमी आफ् साइन्सेज्'—प्रभृतयः संस्थाः तत्तद्-भारतीयविद्यासु रुचिपराः सत्यः सततं यतन्ते।

अथातः पाश्चात्यदेशेषु दृष्टिं निक्षिपामः। तत्र इङ्गलैण्डदेशः प्रथमं विचार-योग्यः। यतस्तद्देशीयेन विलिएम्-जोन्समहाभागेन सर्वप्रथमं महता कष्टेन संस्कृतमधीत्य ग्रीकभाषायाः संस्कृतेन सह साम्यमन्विष्य च तत्प्रतिपादकः एको निबन्धः प्रकाशितः, यं लक्ष्यीकृत्य पाश्चात्यदेशेषु संस्कृताध्ययनविषये कुतूहल-मुत्पन्नम्। संस्कृताध्ययनपरम्परा च तत एव प्रचलिता अभवत्। लन्दननगरे प्राच्यविद्यानामध्ययनाय स्वतन्त्रो विभागः स्थापितः। संस्कृताध्ययनविषये प्रका-शनविषये च 'इण्डिया ऑफिस'-ग्रन्थसंग्रहस्य, 'रायल एशियाटिक सोसायटी' संस्थायाः, लन्दन-कैम्ब्रिज-आक्सफोर्डविश्वविद्यालयानां, टर्नर-ब्रफ-एलेन्-बेली-टी०बरोप्रभृतीनां सततं प्रयतमानानां विदुषां च नामानि विशिष्य उल्लेखनी-यानि सन्ति। आयर्लैण्डदेशे 'डबलिन् स्कूल आफ् ऐड्वान्स्ड स्टडीज्' संस्थायां नियुक्तेन प्रो० एम्० डिल्लन्महोदयेन संस्कृताय महान् प्रयत्नो विहितः।

अमेरिकादेशे प्रथमविश्वयुद्धात् प्रागेव अष्टसु विश्वविद्यालयेषु येल्-जॉन्स्-हॉप्किन्स्-हार्वर्ड-कोलम्बिया-शिकागो-कैलीफोर्निया-प्रिस्टन्-पेन्सिलवानिया-नामकेषु संस्कृतपीठं स्थापितमासीत्। आध्यात्मिकविद्यामन्दिरद्वयं ( हार्टफोर्डइतियूनियन् इति च ) कार्यरतमासीत्। तदनन्तरं यथासमयं मिशीगन-मिनेसोटा-विस्कान्सिन्-कार्नेल-हवाई-सिराक्रुज-टेक्सास् विश्वविद्यालयेष्वपि भारतीयविद्याध्ययनस्य व्यवस्था उपक्रान्ता। प्रथमतः सैलिस्बरीमहोदयेन संस्कृताध्ययनं प्रारब्धम्, 'अमेरिकन् ओरिएण्टल् सोसायटी' इति संस्था च संस्थापिता। तत्तद्विश्वविद्यालयेषु संस्कृतप्राध्यापकपदमलङ्कुर्वाणैः यैः अध्ययनाध्यापन-शोधनिबन्धलेखन-नष्टप्रायग्रन्थजीर्णोद्धारतत्प्रकाशन-भाषणप्रचारादिभिः महत् कष्टं सोढ्वापि संस्कृतस्य महान्तः उपकाराः कृताः तेषां ह्विटनी-हॉपकिन्स्-ब्लूमफील्ड-यफ्० एड्गर्टन् लुईरेनु-पाल्थिएम्-प ल्टेडेस्को-जैक्सन - ग्रे- बुइट्नेन्-राइडर् - एमेन्यू-डब्ल्यू० नार्मन् बाटन्-जार्जकार्डोना-लेमान्-इन्गल्स्प्रभृतीनां नामानि अविस्मरणीयानि सन्ति। तत्र भारत-पाकिस्तान-श्रीलङ्कासम्बन्धितत्त्वानां विद्यानाञ्चाध्ययनाय १९६५ तमे वर्षे, 'दि साउथ-एशिया-लैंग्वेज ऐण्ड एरिया सेन्टर आफ् दि यूनिवर्सिटी आफ् राचेस्टर' इत्यस्य केन्द्रस्य स्थापना कृता, १९६६-६७ सत्राय नव्यप्राचीनोभयसन्निवेशोद्देश्यकः पाठ्यक्रमश्च निर्धारितः। विशेषविदां निर्देशानुसारं पुस्तकालयः एकः सङ्कलितो यत्र त्रयोदशसहस्राधिकानि पुस्तकानि वर्तन्ते, क्रमशस्तेषां संख्या समेधते च। तत्सञ्चालनाय नैकेऽधिकारिणस्तत्सहयोगिनश्च नियुक्ताः सन्ति। हिन्दी-पालि-संस्कृतभाषाणां च तत्र अध्ययनं परिचाल्यते।

जर्मनीदेशे महता परिमाणेन निष्ठापूर्वकं संस्कृताध्ययनं प्रवृत्तम्। विलियम्जोन्स्महोदयेन कृतं शाकुन्तलस्य आंग्लभाषानुवादं पठित्वा संप्रहृष्टेन जर्मनकविना गेटेमहोदयेन शाकुन्तलस्य या स्तुतिःकृता तां जानन्त्येव सम्यक् श्रीमन्तः। द्वितीयविश्वयुद्धात् प्राक् तत्र संस्कृताध्यापकानां चतुर्दशस्थानानि आसन्। द्वितीयविश्वयुद्धे विनष्टप्रायेऽपि जर्मनीदेशे बर्लिन हैम्बर्ग-गोटिंगन-मारबुर्ग-बॉन्-ट्यूबिंगेन्-म्यूनिख-लीपजिग्नामकेषु अष्टसु विश्वविद्यालयेषु संस्कृतपीठानि वर्तन्ते। श्लेगेल-फ्रैंड्रिक-रुकर्ट-हम्बाल्ट्-बोर्ट्लिग्-राथ्-मैक्समूलर-आफ्रैक्ट-वेबर - हिलेब्रान्ट्-पिशेल्-वाल्डश्मिट्-याकोबी-कीलहार्न-आल्सडार्फप्रभृतिभिःकृतः संस्कृतसेवाप्रयत्नः कदापि विस्मर्तुं न शक्यते।

एवमेव ख्रीष्टीयेऽष्टादशशतके फ्रेञ्चानां मनो भारतीयविद्यां प्रति समाकृष्टमभूत् । कालमेतमहोदयेन पों-महोदयेन च बहवो ग्रन्थाः पेरिसं नीताः, हस्तलेखाना सूचिश्च १९३९ तमे वर्षे प्रकाशिता । महनीयं कार्यं कृतवतां दस्लोंग्शाँ-बूर्नोफ-वार्थेलोमी-लामार्ती-रेयाँ-वेर्गेन्-दुत्रेय-सिल्वांलेवी - जूलब्लॉख - रेन्-वियार्दो-प्रमुखाना मनीषिमान्याना नामानि सबहुमानमुल्लेखनीयानि सन्ति । इटलीदेशे संस्कृताध्ययनपराणि नेपल्स् मिलान ट्यूरिन् - फ्लोरेन्सस्थानि विद्यास्थानानि ज्ञेयानि सन्ति । डॉ० तूच्चीमहोदयस्य अभिधानमुल्लेखमर्हति । बेल्जियम्-हालैण्ड-स्विटजरलैण्ड-स्पेन डेन्मार्क-नार्वे-स्वीडन-कनाडा-रूमानिया-पोर्तुगालप्रभृतिषु देशेष्वपि तत्र तत्र अनेकानि सस्कृतविद्यास्थानानि विलसन्ति, यत्र संस्कृतस्य महती सेवा पूर्वं कार्यं कृतवद्भिः सम्पादिता, कुर्वद्भिश्चाधुना सम्पाद्यते । सर्वेषां देशानां विषये पृथक् पृथग् विवरणं नात्र प्रस्तूयते निबन्धविस्तारभिया ।

अथास्माभिः संस्कृतस्य सार्वभौमं महिमानमाकलयद्भिः सम्प्रति विदेशीय-संस्कृतप्रचारविषये कश्चिद् विचारः प्रवर्तनीयः, कश्चित् संकल्पः आस्थेयः, कोऽपि भावी कार्यक्रमश्च निर्धारणीयः । यथा—

१—अस्माभिः संस्कृतज्ञानां वैदेशिकविदुषां सूचिरेका निर्मेयास्ति । तत्र के सस्कृतभाषणे समर्थाः, के लेखने, के च केवलं बोधे एव क्षमाः इत्यस्यापि उल्लेखः कार्यो विद्यते । विदेशस्थाना भारतीयानां विदेशीयानाञ्च संस्कृतविदुषां तत्कृतिभिः साकं सूचिरेका सम्पादनीया ।

२—कुत्र संस्कृतस्य स्वतन्त्ररूपेणाध्ययनं प्रचलति, कुत्र च अन्यस्य कस्यचिद् विषयस्य अङ्गरूपेणेति सूचनापि संग्राह्या अस्ति ।

३—अध्ययनातिरिक्तो नाटक-गोष्ठी-काव्यपाठादिकार्यकलापः कुत्रचित् सञ्चाल्यते न वा । न सञ्चाल्यते चेत्तर्हि तदर्थं तेभ्यः प्रेरणा दातव्या भविष्यति ।

४—वैदेशिकैः संस्कृताध्ययने यदि किमपि प्रातिकूल्यं काठिन्यं वानुभूयते तदपनोदनार्थं प्रयतनीयमस्माभिः ।

५—विदेशेषु कृतायोजनाना संस्कृतनाटकाना छायाचित्राणि यदि समुपलभ्येरन् तेषां विवरणात्मकः संग्रहः कार्यः ।



# कर्ममीमांसादर्शनम् ।

## क्रियापादः ।

द्वितीयपादे सृष्टिप्रवर्त्तकस्य सृष्टिनिवर्त्तकस्य च कर्मवृक्षस्य बीजस्वरूपसंस्कारविज्ञानं वर्णयित्वा संस्कारमूलकबीजसमुद्भूतवृक्षरूपस्य कर्मणो विज्ञानं तृतीयपादेऽत्र वर्णयितुकामो महर्षिर्भरद्वाजो मुक्तिमार्गं सरलीकुर्वन् आह—

**प्राकृतिकः स्पन्दः क्रिया ॥ १ ॥**

प्राकृतिकः प्रकृतेः प्रादुर्भूतः स्पन्दः कम्प एव क्रिया कर्मशब्दवाच्यो भवति। त्रिगुणमयी प्रकृतिर्हि रजोगुणेन हेतुना नित्यं परिणमन्ती दृश्यते। तत्परिणामश्च कदाचित् सत्त्वात् तमोऽभिमुखम्, कदापि च तमसः सत्त्वाभिमुखं निसर्गत एव बोभवीति। यथा हि—प्रकृतेस्त्रैगुण्यं स्वाभाविकं, तथैव तत्परिणामोऽपि नैसर्गिक एव; नात्र कोऽपि संशीतिलेशः। तदेव स्वभावसिद्धं स्पन्दनं क्रियेत्यभिधीयते। तथा हि स्मृतिशास्त्रे—

विबुधाः साम्प्रतं वच्मि कर्म त्रैविध्यगोचरम्।
वैज्ञानिकं स्वरूपं नः सावधानैर्निशम्यताम् ॥
स्वभावात् प्रकृतिर्मे हि स्पन्दते परिणामिनी।
स एव स्पन्दहिल्लोलः स्वभावोत्पादितो मुहुः ॥
सदैवास्ते भवन् देवाः! स्वरूपे प्रतिविम्बितः।
तस्मान्मम प्राकृतानां गुणानां परिणामतः ॥
अविद्याऽऽविर्भवेन्नूनं तरङ्गैस्तामसोन्मुखैः।
सत्त्वोन्मुखैश्च तैर्देवा! विद्याऽऽविर्भावमेति च ॥

तदाऽऽविद्याप्रभावेण तरङ्गाणां मुहुर्मुहुः ।
आघातप्रतिघाताभ्यां जलैः पूर्णे जलाशये ॥
अगण्यवीचिसङ्घेषु नैकवैधवविम्बवत् ।
चिड्ज्जड़ग्रन्थिमि देवाः ! स्वत उत्पद्य भूरिशः ॥
जीवप्रवाहपुञ्जोऽयमनाद्यन्तो वितन्यते ।
तदैवोत्पद्य संस्कारो नूनं स्वाभाविको मम ॥
कर्मणा सहजेनैव विश्वविस्तारकारिणा ।
आविर्भावयते सृष्टिं जङ्गमस्थावरात्मिकाम् ॥ १ ॥

क्रियायाः को हि नैसर्गिको हेतुरित्यत्राह—

## नैसर्गिको हेतुरस्याः शृङ्गारः ॥ २ ॥

अस्याः क्रियायाः स्वाभाविकं कारणं शृङ्गार एव भवति । संसारेऽत्र नास्त्यहैतुकः कोऽपि पदार्थः, अतः स्पन्दनजनितस्य कर्मणः को हेतुः ? कर्मबीजं संस्कारस्तर्हि स्वाभाविकसंस्कारस्य को हेतुः ? स्वाभाविकं स्पन्दनं हि यद्युभयोरेव संस्कारकर्मणोर्हेतुः स्वीक्रियेत चेत्तर्हि तयोरेतयोर्मौलिकहेतुविषयेऽपि शङ्कासमुदेत्येव । अन्यच्च संस्कारकर्मजनितस्य दृश्यप्रपञ्चस्वरूपसंसारस्याविर्भावे किञ्च प्रधानकारणम् ? संसारश्च कथमुत्पद्यते ? किञ्च सर्गस्य मौलिकं कारणम् ? इत्यादि नानासंशीतिसमाहितये किल सूत्रमिदमाविश्चकार पूज्यपादो महर्षिः सूत्रकारः । पूर्वोक्तसर्वविधसंशयानामिदमेवैकं समाधानं यत् प्रकृतिपुरुषात्मकः शृङ्गार एव सर्वनिदानभूतः । ब्रह्मशक्तिः प्रकृतिर्हि यदा परमपुरुषरूपे परमात्मनि अद्वैतदशायां निलीयमाना तिष्ठति, सैवावस्था सृष्टिसंस्कारकर्मविहीनेत्युच्यते । सच्चिदानन्दस्य परमपुरुषस्य परमात्मनोऽद्वैते स्वस्वरूपेऽन्तर्हिता शक्तिरिव प्रकृतिरपि तत्रैव निलीना तिष्ठति । नचैतस्यास्तदानीं सत्तास्वातन्त्र्यमिति निर्विवादम् । यदा किल स्वीयां स्वतन्त्रसत्तां धारयन्ती पराप्रकृतिः परमपुरुषमालिङ्गति, तदीक्षणाय च परिणामिनी भवति, सैव प्रकृतिपुरुषात्मकशृङ्गारावस्था सर्वेषां कारणमिति । तथाहि स्मर्यते चात्र—

स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह।
स्त्रीरूपो वामभागांशो दक्षिणांशः पुमान् स्मृतः ॥
दृष्ट्वा तां तु तया सार्द्धं रासेशो रासमण्डले।
रासोल्लासे सुरसिको रासक्रीडां चकार ह ॥
नानाप्रकारशृङ्गारं शृङ्गारो मूर्त्तिमानिव।
चकार सुखसम्भोगं यावद्वै ब्रह्मणो दिनम् ॥

प्रकारान्तरेणापीदं विज्ञानमवगन्तु शक्यते। तथाहि ब्रह्मणः सच्चिदानन्दात्मकेषु भावेषु अस्ति-भाति इति विचारतः सत् चिदित्युभयं स्वयमेव वेदनीयम् परमानन्दभाव उभयसाहाय्यं विना नैव वेदितुं शक्यते। यतो हि ऋते सद्भावसाहाय्याद् चिद्भावे, चिद्भावसाहाय्यमन्तरेण च सद्भावे नानुभूयते ह्यानन्दप्रकाशः। तस्मादानन्दविलासहेतवे प्रकृतिपुरुषात्मकस्य शृङ्गारस्यावश्यकत्वं वर्त्तत एव। अयमेव सृष्टिप्रपञ्चस्य मौलिको हेतुः। पुनरामानन्दभावस्य चित्सत्साहाय्येन स्वतन्त्रोपलब्धये प्रकृतेः पुरुषस्य च स्वतन्त्रा सत्ताऽऽविरस्ति। अनयैवावस्थया प्रकृतिर्विकुर्वाणा स्वीयां साम्यावस्थां परित्यजन्ती वैषम्यावस्थामङ्गीकृत्य त्रिगुणपरिणामं दधाति। इयमवस्थैव संस्कारकर्मणोरुभयोरेव मौलिको हेतुरिति ॥ २ ॥

कोऽस्य विस्तारहेतुरित्युच्यते—

## द्वन्द्वशक्त्या वितानम् ॥ ३ ॥

तस्य कर्मणः द्वन्द्वशक्त्या शक्तिद्वयेन वितानं विस्तारो भवति। स्वाभाविकस्यापि कर्मणो वितानम् अनन्तशाखाभिः परिपूर्णतामभ्युपैतीत्यस्य किं रहस्यमिति शङ्कां समावर्त्ते। तथाहि—प्रथमं किल कर्म प्रकृतिपुरुषात्मकशृङ्गारेण हेतुना स्वत एव समुत्पद्यते। ततश्च द्वन्द्वशक्तिसाहाय्येन बहुशाखाभिर्विस्तृतिमापद्यते। अवगमनार्थमत्रोदाह्रियते यत् बाह्यजगति द्वन्द्वशक्तिरिय रजोमूलकाकर्षणात्मिका तमोमूलकविकर्षण-

स्वरूपा च। सैवान्तर्जगति रजोमूलको रागः तमोमूलको द्वेषश्च प्रणिगद्यते। एतस्या द्वन्द्वशक्तेः घातप्रतिघाताभ्यां परिभ्रमति किलानिवार्यरूपेण निरन्तरं कर्मचक्रम्। स्थूले जगति ग्रहोपग्रहादीनां गतिः, जैवे जगति गमागमचक्रगतिः, मानवान्तःकरणेषु कर्मोत्पत्तेरविरामं प्रस्रवणं चेत्यादि सर्वमिदं द्वन्द्वमूलकस्य कर्मणो विस्ताररहस्यस्योदाहरणमवगन्तव्यमिति ॥ ३ ॥

इदानीं तद्विकासरहस्यं विविनक्ति—

**अस्या विकासो मेघवत् ॥ ४ ॥**

अस्याः शक्ते मेघवद् विकासो भवति। मेघशून्ये निर्मल आकाशे सर्वत्रैवं मेघोत्पत्तिरवलोक्यते। मेघश्चैकदेशजायमानोऽपि वियन्मण्डलं परितः समावृणोति। तदानीं ( वियददर्शनं गच्छति ) समाच्छन्ने वियति सर्वत्रैव यथा वारिवाहाः समवलोक्यन्ते, तथैव स्थूलेषु सूक्ष्मेषु च प्रपञ्चेषु स्वत एव बोभवीति द्वन्द्वशक्तिविकासः। प्राकृतिकतरङ्गाणां घातप्रतिघातावेव तदीयो हेतुरिति ॥ ४ ॥

अन्यच्च समाचष्टे—

**रूपशब्दाभ्यामसौ ॥ ५ ॥**

रूपशब्दाभ्याम् असौ प्राकट्यमासादयति। यत्र यत्र सर्गस्तत्र तत्र रूपशब्दयोः सद्भावो निश्चितः। सृष्टेः स्थूलदशा सूक्ष्मावस्था वा भवेत्, सर्वेष्वपि दृश्यप्रपञ्चेषु रूपशब्दसम्बन्ध इत्यत्र नास्त्यणीयानपि सन्देहलेशः। यतो द्रष्टुर्दृश्यस्य च सम्बन्धो रूपेणैव सिध्यति, रूपसद्भावे नामसम्भवः स्वत एव सिद्धः। अत्र श्रुतयोऽपि व्याचक्षते, तथाहि "नामरूपे व्याकरवाणि।" "सर्वाणि रूपाणि विचित्य धीरा नामानि कृत्वाभिवदन् यदास्ते" "आकाशो ह वै नामरूपयोर्निर्वहिता" इत्यादि ॥ ५ ॥

कर्मणः साक्षात्फलदातृत्वमभिधत्ते—

**तया सर्गस्थितिप्रत्यवहारा ब्रह्माण्डपिण्डयोः ॥ ६ ॥**

तयैव क्रियया ब्रह्माण्ड-पिण्डयोः सृष्टिस्थितिप्रलयाः सम्भवन्ति। ब्रह्माण्डमेकं यदा प्रलयगर्भे विलीयते तदानीं ब्रह्माण्डीयः समष्टिकर्म-बीजसंस्कारराशिः प्रकृत्या सह ब्रह्मण्येव विलयं गच्छति। अनन्तरं यदा तस्य ब्रह्माण्डस्य सिसृक्षा जायते तदा "यथापूर्वमकल्पयत्" इति श्रुतिसिद्धान्तमनुसृत्य तद्ब्रह्माण्डीयपूर्वसंस्कारराशिषु अङ्कुरोन्मुखान् संस्कारान् संस्मृत्य ब्रह्माण्डं सृज्यते। तेनेदं सिध्यति यत् कर्मैव ब्रह्माण्ड-सृष्टिनिदानमिति। बीजवृक्षवत् संस्कारकर्मणोरभेदः द्वयोरपि स्वाधीनत्वात् कर्मण एव प्राधान्यम्, संस्कारस्तु कर्मानुसारं प्रादुर्भवति। अतो हेतो ब्रह्माण्डस्य सर्जने कर्मैव मूलकारणमभ्युपगन्तव्यम्। अन्यच्च पिण्डसृष्टिः कर्माधीनेति प्रत्यक्षं सिध्यति। "कर्माधीनं जगत्सर्वम्" इति स्मृतिरपि विज्ञानमिदं समर्थयति। पूर्वमेवैतत् सिद्धान्तितम् यत् प्रत्येकमानवीय-कर्मबीजसंस्कारराशयः कथमिव सञ्चितक्रियमाणप्रारब्धरूपेषु परिणमन्ति; तेषु च प्रारब्धकर्मणा किमिव पिण्डोत्पत्तिरिति। सुतरां मानवदैवपिण्डानि प्रारब्धकर्मणैव समुत्पद्यन्ते। सहजपिण्डमपि स्वाभाविकसंस्कारस्य सहज-कर्मणश्च कथमिवाधीनतां भजतीत्यपि पूर्वोक्ते संस्कारपादे सम्यक् सुसिद्धमेव। अतो ब्रह्माण्ड-पिण्डयोः कर्माधीनैवेति नास्त्यत्र सन्देहलेशोऽपीति ॥ ६ ॥

अन्यच्च—

**आकर्षणविकर्षणे च ॥ ७ ॥**

आकर्षणं विकर्षणमपि साक्षात् कर्मण एव परिणामभूतमवधार्यम्। कर्मफलस्य द्वितीयोदाहृतिरियं यत् आपरमाणोः ग्रहोपग्रहपर्यन्तम्, आपिण्डेभ्यो ब्रह्माण्डं यावत् येयमाकर्षणविकर्षणयोः शक्तिर्दृश्यते, सापि कर्मण एव साक्षादुदर्करूपाऽवगन्तव्या। आकर्षणशक्तिबलेनैव परमाणवः परस्परं सम्मिलन्ति विकर्षणशक्तिबलेन च पृथग् भवन्ति। सर्गदशायां

परमाणुपुञ्जानां पारस्परिकं सम्मेलनं, विसर्गावस्थायां चाऽन्योन्यं पृथग्भावः संजायते। काष्ठप्रस्तरलोष्ठादिसाधारणेषु पदार्थेषु पृथिव्यादिषु सुमहत्सु लोकेष्वपि सैवाऽऽकर्षणविकर्षणात्मिका क्रिया दरीदृश्यते, तन्मूले च विद्यमानं कर्म व्यतिरिक्तं नान्यत् किमपि। अथ चान्तर्जगति रागविद्वेषात्मिके आकर्षणविकर्षणशक्ती यदन्तःकरणं तरङ्गायितं कुरुतस्तदपि सर्वं कर्मणः असाधारणशक्तिं निर्विभर्त्ति। शिलादिस्थावरेषु पदार्थेषु सहजं कर्म, ब्रह्माण्डपिण्डात्मकसृष्टिक्रियासु विविधान्तःकरणवृत्तिषु च जैवकर्मणः शक्तिरेव विधेयविधाने पटीयसीति ॥ ७ ॥

विषयेऽत्र क्रियाभेदं विवृणुते—

**ऊर्ध्वगाऽधोगा च ॥ ८ ॥**

क्रिया खलूर्ध्वगा अधोगा च भवति। अनन्तरूपधारिणः कर्मसाम्राज्यस्य प्रक्रियायाः साधारण्येन द्विविधो भेद। क्रियाचैकोर्ध्वगामिनी, द्वितीयाऽधोगामिनीति। कर्मशक्तिजनितयोः पापपुण्यात्मिकयोः क्रिययोः पुण्यस्वरूपा ऊर्ध्वगामिनी, पापात्मिका च अधोगामिनी। जन्मान्तरप्राप्तिक्रियासु भुवः, स्वः, महः, जन आदिषूर्ध्वलोकेषु या गतिः सा किलोर्ध्वगामिनी, नरकप्रेतलोकगतिश्चाधोगामिनीत्युच्यते। भगवतः सहस्ररश्मेरुदयगतिरूर्ध्वगामिनी, तदस्तगतिरधोगामिनी, जीवपिण्डस्य बाल्यकौमारयौवनावस्था ऊर्ध्वगतिशीला वार्द्धक्यदशा चाधोगतिशीला समाम्नाता। आभ्यन्तरराज्येषु अक्लिष्टा वृत्तय ऊर्ध्वगतिकाः क्लिष्टा वृत्तयश्चाधोगतिकाः भवन्ति। तद्वदेव सत्त्वोन्मुखी रजोगुणक्रिया ऊर्ध्वगा तमोगुणोन्मुखी चाऽधोगा स्वीकार्येति ॥ ८ ॥

प्रासङ्गिकीं शङ्कां समाधत्ते—

**नैसर्गिकी कर्मसंस्कारजा सृष्टिः ॥ ९ ॥**

कर्मणा संस्कारेण च जायमाना सृष्टिः स्वाभाविकी भवति। सर्गप्रक्रिया किल कर्मजन्या संस्कारसमुद्भवा च वेदितव्या। यतो हि संस्कारः

कर्मबीजम्, कर्म च संस्काररूपबीजस्य वृक्षस्वरूपम्। अतश्च सर्गोऽयमुभयजन्य इत्युक्तिर्नितरां संगच्छते। अन्यच्च यदि प्रकृतिः स्वभावत एव त्रिगुणात्मिका यदि च कर्म स्वभावात् प्रकृतिहिल्लोलतः समुत्पद्यते, यदि चापि पूर्वाध्यायवर्णितसिद्धान्तानुसारं स्वाभाविकः संस्कारः स्वत एव प्रादुर्भवति; तर्हीदमवश्यमभ्युपगन्तव्यम् यदियं सृष्टिक्रिया कर्मसंस्कारजन्या प्रवाहरूपेण स्वाभाविकी चेति ॥ ९ ॥

प्रकृतं विज्ञानम् उदाहरणद्वारा परिपोषयति—

**ऊर्णनाभवत् केशलोमवच्च ॥ १० ॥**

यथा किलोर्णनाभः स्वीयप्रकृतिवशीभूतः स्वत एव जालप्रपञ्चं रचयति, यथा च मानवशरीरेषु स्वभावत एव केशलोमानि समुत्पद्यन्ते, तथैव कर्मजनितं सर्गप्रपञ्चमपि स्वत एव प्राकट्यमेतीति ॥ १० ॥

प्रसङ्गतः कर्मणा सह शक्तिसम्बन्धं निदर्शयति—

**शक्तिः कर्मायत्ता हिमालयैश्वर्यवत् ॥ ११ ॥**

ऐश्वर्यम् हिमालयस्येव शक्तिः कर्मणोऽधीनतां भजते। विश्वविश्रुतो हिमालयो नाम गिरिराजः सर्वविधानाम् ऐश्वर्याणां खनिः। प्रसिद्धाः पावनाः नद्यो नदाश्च तत एव प्रादुर्भवन्ति। विविधप्रकारा रत्नराशयः सुवर्णादिधातवो बहुविधाश्च खनिजपदार्थाः तुषाराद्रिगर्भेषु अनायासेनैव समुपलभ्यन्ते, सर्वविधानां वनौषधीनामपि हिमाचलसुविशालवक्षःस्थले समुत्पत्तिर्निभाल्यते, न कोऽप्येवंविधो वन्यः पशुः, न कश्चिदपि तादृशो विहङ्गमः, न कश्चिदपि तथाभूत उद्भिज्जो निभालितो यः किल हिमालयमाश्रित्य न जीवति, एतत्सामान्यविचारप्रदर्शनेनेदं सिध्यति यद् नगाधिराजस्तु हिमाचलः सर्वविधानामैश्वर्याणां खनिः, प्राकृतिकसुषमाया आकरश्च। अनयैवोदाहृत्येदमवगन्तव्यम्, यत् अध्यात्माधिदैवाधिभूतात्मिकाः सर्वा अपि शक्तयः कर्मण आश्रयेणैव समुत्पद्यन्ते। मानव्यो, दैव्यः, शारीरिक्यो, मानसिक्यो, लौकिक्योऽलौकिक्योऽ-

ध्यात्मिक्यश्च शक्तयः कर्मणोऽधीनतां प्रतिपद्यते, किम्बहुना, ब्राह्मण-क्षत्रियादिशक्तयो विद्याबुद्धिधनयुद्धादिशक्तयोऽपि कर्मणो वशवर्त्तितां भजन्त इति ॥ ११ ॥

कर्मोत्पत्तिहेतुभूतं विज्ञानं परिपोषति—

**सच्चितोर्गमागमतः कर्म ॥ १२ ॥**

सत् च चित् च तयोः सच्चितोरभिमुखं गमनागमनतः कर्मोत्पत्तिर्भवति। आनन्दानुभवार्थं चितः सदभिमुखं सतश्च चिदभिमुखं भावतरङ्गाणां गतिरेव कर्मोत्पत्तिनिदानम्, तदेव सृष्टिनिदानमपि वक्तुं शक्यते। यद्यपि कर्मोत्पत्तिविज्ञानं सृष्टिविज्ञानं च पूर्वमेव सम्यग् विवेचितमास्ते, तथापि कर्मणो महत्तां द्रढीकर्त्तुं पुनरपि किञ्चिदुच्यते। सच्चितोरपि साहाय्य-मन्तरा नानुभवितुं शक्यत आनन्दः, अतो ह्यानन्दानुभवाय सतः चिदभि-मुखं चितश्च सदभिमुखं स्वानुभूतिसम्बन्धेन विविधभावानुकूलाः स्वतन्त्रा-नुभवाः किल कर्मोद्भवस्य मौलिककारणानि व्याचष्टुं शक्यन्ते। समाधिस्थै-र्योगिभिर्विज्ञानमिदमवगम्यते यत् प्रकृतेर्लयावस्थायां, यदा हि अद्वैतरूपे ब्रह्मसद्भावदशा तिष्ठति, तदानीं सच्चिदानन्दानां त्रयाणामपि भावानाम् अद्वैतसत्ता बोभवीति। स्वरूपावस्थायामेतस्यां तेषां त्रयाणामपि भावानां पार्थक्यानुभूतिर्न सम्भवा, किन्तु यदि त्रयाणामपि भावानां पृथक् पृथग-नुभवो जायते तदा चिद्भावस्य सद्भावस्य चानुभवनं पृथक् पृथगेव भवति, अस्ति भातीति द्वयं सच्चितोरनुभूतिकारणम्। दशायामत्र ब्रह्म-प्रकृतिरव्यक्तावस्थां विरहय्य सूक्ष्मावस्थामाश्रयति, सैव दशा कर्मोत्पत्ति-निदानभूता जायते। यद्यपि प्राकृतिकत्रिगुणस्पष्टविकासदशायामेव याथार्थ्यतः कर्म समुत्पद्यते; किन्तु पूर्वावस्थैव मौलिकनिदानमाम्नायते ॥१२॥

प्रासङ्गिकं कर्मणो विशिष्टं महत्त्वं व्याहरति—

**कर्मसमष्टिर्विश्वसामञ्जस्यकृन्नदीप्रवाहवत् ॥ १३ ॥**

नदीप्रवाह इव कर्मणः समष्टिः जगतः सामञ्जस्यं विधत्ते। नद्याः प्रवाहो यथा जलं नियमयन् समुद्रं प्रापयन् पयः सामञ्जस्यरक्षां प्रकुरुते,

वर्षर्त्तौ च जलप्लावनतो देशं परिरक्षति, सर्वत्र यथावश्यकं पानीयमर्पयन् अधिकं जलं पयोधिं गमयति; तथैव ब्रह्माण्डस्य समष्टिभूतं कर्म ब्रह्माण्ड-सामञ्जस्यसंरक्षणे प्रवृत्तमास्ते, यद्यपि वा षड्ऋतुनामुत्पत्तिस्थितयो लक्ष्यभूता भवेयुः, किम्वा भगवतः सहस्ररश्मेर्गतिशक्ती लक्ष्यभूते भवेताम्, अथवा वाष्पसमूहवियदुत्पतनमेघराशिसमुत्पत्तिजलवृष्टिप्रभृतिक्रियाकलापेषु विमर्शः क्रियते, यदि वा महामारीमहायुद्धादिदैवक्रियासमूहस्य क्रियासमष्टिरेव समर्थेति ध्रुवं स्वीकार्यमेव स्यात् ॥ १३ ॥

विज्ञानमिदं सुस्पष्टयितुं सर्वस्य मौलिकं तत्त्वमभिधत्ते—

## त्रिगुणमयी सर्वमूलम् ॥ १४ ॥

त्रिगुणात्मिका प्रकृतिरेव सर्वस्य मूलकारणमवगन्तव्यम् । सूक्ष्मातिसूक्ष्मविमर्शतोऽपीदमेव सिद्धान्तितव्यं स्यात् यत्त्रिगुणात्मिका प्रकृतिरेव निखिलमूलनिदानमास्ते । अद्वैतभावापन्नस्य ब्रह्मणः स्वरूपावस्थातो द्वैतावस्थाया ये खलु परिणामिनो भावाः, तेषां सर्वेषामेव त्रिगुणस्वरूपा प्रकृतिरेव कारणभूता, यद्यपि लयावस्थायां न भवति प्रकृतौ गुणत्रयविकासः, यदि चापि परवर्त्तिन्यां दशायां प्रकृतिः त्रिगुणभावतस्तरङ्गायिताऽनुभूयते, यदि वाऽसौ कदाचित् तुरीयदशां कदापि कारणावस्थां, कदाचिद्वा सूक्ष्मावस्थां, कर्हिचिच्च स्थूलां दशां भजन्ती स्थूलसूक्ष्मात्मकस्य जगतः सर्गस्थितिप्रलयक्रियां विदधती विभाति किन्तु द्वैतावस्थायाः सर्वविधान्यपि विधेयजातानि प्रकृतिद्वारैव सम्पद्यन्त इति सर्वतन्त्रसम्मतः सिद्धान्तः ॥ १४ ॥

तत्स्वरूपस्य विशिष्टः परिचयो दीयते—

## सा विद्याऽविद्यारूपा ॥ १५ ॥

सा प्रकृतिः विद्यारूपा अविद्यारूपा च भवति । ब्रह्मणः पार्थक्यमासादयन्ती ब्रह्मप्रकृतिः यदा द्वैतप्रपञ्चं सृजति, तदानीमवस्थाभेदेन

तत्स्वरूपद्वैविध्यमाम्नायते। विद्याऽविद्येति तद्द्विविधभेदस्य संज्ञा। ज्ञानजननी विद्या, अज्ञानजनयित्री अविद्येत्युच्यते। स्मर्यते चात्र—

विद्याऽविद्येति तस्या द्वे रूपे जानीहि पार्थिव।
विद्यया मुच्यते जन्तुर्बध्यतेऽविद्यया पुनः॥ १५॥

अधिष्ठानरहस्यमुभयोर्विविनक्ति—

तयोरधिष्ठाने सत्त्वतमसी॥ १६॥

तयोर्विद्याऽविद्ययोरधिष्ठानं सत्त्वं तमश्च, यद्यपि स्थावरजङ्गमजडचेतनपदार्थेषु सर्वत्रैव त्रिगुणक्रियासामान्यरूपेणाधिगम्यते, परन्तु विद्याऽविद्यासम्बन्धस्तु जीवान्तःकरणसम्बद्ध एव। यतो हि उभयोरधिष्ठानसम्बन्धो ज्ञानाज्ञानतो हि विद्यते। जीवान्तःकरणेषु वा, सहज-मानवदैवपिण्डेषु वा, यत्र यत्र आत्मावरणजनकमज्ञानमस्ति, तत्र तत्राविद्याधिष्ठानमवगन्तव्यम्, यत्र चात्मप्रकाशकं ज्ञानं निभाल्यते तत्र विद्याऽधिष्ठानसम्बन्धो वेदितव्य इति स्वीकर्त्तव्यम्। एतद्विज्ञानमवगन्तुमज्ञानभूमिज्ञानभूमिसम्बन्धीयमधोलिखितं भगवद्वचनमनुसन्धेयं जिज्ञासुभिरिति—

सप्तानां ज्ञानभूमीनां प्रथमा ज्ञानदा भवेत्।
संन्यासदा द्वितीया स्यात् तृतीया योगदा भवेत्॥
लीलोन्मुक्तिश्चतुर्थी स्यात् पञ्चमी सत्पदा स्मृता।
षष्ठ्यानन्दपदा ज्ञेया सप्तमी च परात्परा॥
यावज्जीवैरतिक्रान्ता न सप्ताऽज्ञानभूमयः।
तावन्न प्रथमा भूमिर्ज्ञानस्य ज्ञानदाऽऽप्यते॥
उद्भिज्जानां चिदाकाशे प्रथमाऽज्ञानभूमिका।
स्वेदजानां चिदाकाशे सा द्वितीया प्रकीर्त्तिता॥
तृतीयाऽण्डजजातेश्चाज्ञानभूमिश्चिदाश्रिता।
जरायुजपशूनाञ्च चिदाकाशे चतुर्थ्यसौ॥

पञ्चकोषप्रपूर्णत्वाधिकारिष्वेव वै नृषु ।
सन्ति शेषा अधिकृतास्तित्रस्तत्वज्ञानभूमयः ॥
तिस्रस्ता एव कथ्यन्ते उत्तमाधममध्यमाः ॥ १६ ॥

प्रासङ्गिकमभिधत्ते—

अन्योन्याश्रयत्वं गुणानाम् ॥ १७ ॥

गुणेषु अन्योन्याश्रयत्वमवधेयम् । नितान्तदुर्ज्ञेयं समाधिगम्यं त्रिगुणक्रियोत्पत्ते रहस्यमवधारयितुं पूज्यचरणो महर्षिः सूत्रकार इदं सूत्रमभ्यधात् । गुणमय्याः प्रकृतेः स्वाभाविकानां सत्त्वरजस्तमोगुणानां पारस्परिकमन्योन्याश्रयत्वमस्ति । यथा हि उष्णता प्रकाशता चेति पावकस्यैव गुणद्वयम्, किन्तूभयोरपि क्रियापार्थक्यवशात् इदं स्वीकर्त्तव्यमेव यत् द्वयोरपि स्वतन्त्रता अन्योन्याश्रयता च विद्यत एव । उष्णत्वमन्तरेण अग्नेः प्रकाशः, प्रकाशमन्तरेण चाग्नेरुष्णत्वं न स्थातुमर्हतः । अनयैवोदाहृत्या समवधार्यं किलैतद् यत् प्रकृतेः त्रयो गुणा अपि परस्पराश्रयतां भजन्ते । स्मर्यते चात्र—

तमो रजस्तथा सत्त्वं गुणानेतान् प्रचक्षते ।
अन्योऽन्यमिथुनाः सर्वे तथान्योन्यानुजीविनः ॥
अन्योन्यापाश्रयाश्चापि तथाऽन्योन्यानुवर्त्तिनः ।
अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्चधातवः ॥

गीतोपनिषदि भगवता श्रीकृष्णेनापि व्याहृतम्, यथा—

"रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा" ॥

सुतराम् एकस्यापि गुणस्योदये द्वावन्यौ गुणौ गौणरूपेण सहायकौ भवतः । यदि नैवं स्यात्तदा गुणानां त्रयाणां नियमितः परिणामो न सम्भवेदिति ॥ १७ ॥

अन्यच्च—

**मिथो मैथुन्यञ्च ॥ १८ ॥**

त्रयाणामपि गुणानामन्योऽन्यं मैथुनत्वमप्यवधार्यम्। यथा किल पूर्वसूत्रोक्तरीत्या मुख्यगुणेऽन्तर्हिते गौणोऽपि गुणो मुख्यतां भजन् क्रियामुत्पादयति तथैव परस्पर सम्मिलितौ द्वावपि गुणौ कार्यमनुतिष्ठतः। यद्वा ब्राह्मणजातौ सत्त्वगुणप्रधानता, क्षत्रियजातौ च रजःसत्त्वप्राधान्यं निभाल्यते वैश्यजातौ च रजस्तमो मिलित्वा कार्यमनुतिष्ठतः, तद्वत् एव त्रयोऽपि गुणाः परस्परं मैथुन्यमधिगच्छन्तोऽनन्तरूपाणि धारयन्तः कर्मराज्यमग्रेसरं विदधति। अतो हि त्रयोऽपि गुणाः क्वचिद्द्वौ, कुत्रचिच्च त्रयो मिलित्वा स्थावरजङ्गमात्मके जगति स्वीयं वैभवं प्रसारयन्तो विराजन्त इति ॥ १८ ॥

अन्यदपि—

**एकमितरयोः क्षेत्रम् ॥ १९ ॥**

एको गुणः इतरयोर्द्वयोर्गुणयोः क्षेत्रम् प्रसवितेति यावत्। यर्हि त्रयोगुणाः परस्परमविद्यमाना अपि अन्योऽन्यं सह युञ्जानाः सन्तः कार्यकलापं विदधते, अन्यच्च—गुणानामुदयास्तौ भवतः, एकस्य गौणत्वमपरस्य च मुख्यत्वमास्ते तर्हि ध्रुवमिदमभ्युपगन्तव्यं यत् एकः प्रधानगुणो गौणीभवन् क्रमशो द्वयोरपरयोः प्रसविता भवति। कारणेनैतेनैव नियमितरूपेण त्रिगुणपरिणामतः सृष्टिस्थितिप्रलयक्रियायाः, दृश्यप्रपञ्चस्य च अनन्तस्वरूपाणि प्रादुर्भवन्ति। विज्ञानमिदं सुस्पष्टमवबोधयितुमिदमुच्यते यत् एको गुणः यदा स्वपूर्णस्वरूप आविर्भवन् स्वीयामुदयदशामधिगच्छन् प्रकृतेः परिवर्तनशीलनियममनुसृत्य स्वकीयामस्तदशां प्राप्नोत्येव; यथा च प्रातःसायं च सन्धिकाले एकत्र भगवतो मार्त्तण्डस्योदयः, तारकाराजीनामस्तता, परत्र च सहस्ररश्मेर्विलयनम्, नक्षत्रपुञ्जानामुदयनम् दृश्यते तथैव गुणैकस्योदये गुणान्तरस्य तिरोधानमित्येतत्सूत्रनिर्गलितार्थः ॥१९॥

गुणसम्बन्धेन कर्मणः स्वरूपं निरूपयति—

त्रिगुणजं कर्म नैसर्गिकम् ॥ २० ॥

त्रिगुणसमुत्पन्नं कर्म स्वाभाविकं भवति। पूर्वोक्तविज्ञानमनुसृत्य यदा सुनिर्णीतमिदं यत् प्राकृतिकास्त्रयो गुणाः परस्परं सहवसन्तोऽन्योन्यमाश्रयन्तो मुख्यतां गौणतां च भजन्तोऽपरं प्रसुवते; तदेदं सिद्धमभूत् यत् गुणत्रयहेतुना प्रकृतिः सहैव परिणामिनी भवति। यत्र परिणामस्तत्र क्रियायाः अस्तित्वम्; यत्र च क्रिया, तत्रैव कर्मराज्यस्य प्रादुर्भावः, सुतरां त्रिगुणविकारकारणेन कर्मणः आविर्भावः स्वभावसिद्धः ॥ २० ॥

कर्मणो नैसर्गिकं गतिविज्ञानं पुनः परिपोषयति—

संस्कारक्रिये बीजाङ्कुरवत् ॥ २१ ॥

संस्कारः क्रिया च बीजङ्कुरवद् भवतः। यथा बीजेन साकं वृक्षस्य सम्बन्धस्तथैव संस्कारेण सार्द्धं कर्मणः सम्बन्धो वेदितव्यः। सिद्धान्तोऽयं पूर्वमपि सुनिर्णीतः। यथा हि धान्यबीजधान्याङ्कुरौ परस्परमुत्पद्यमानौ धान्यसृष्टेरनन्तसत्तां संरक्षतस्तथैव व्यष्टिसमष्टिसंस्काररूपबीजं पिण्ड-ब्रह्माण्डस्वरूपो वृक्षश्च स्वयमनन्योन्यमुत्पादयन्तौ सर्गस्यानन्तधारां स्थायिनीं कुरुतः ॥ २१ ॥

प्रसङ्गतः कर्मफलं निर्णयति—

कर्मणा सर्गसत्ता ॥ २२ ॥

कर्मणा हेतुभूतेन सृष्टेरस्तित्वं विभाव्यते। सृष्टिरियं कर्मणः साक्षात्-फलस्वरूपा। सर्वतन्त्रसम्मतः सिद्धान्तोऽयं यत् यत्र यत्र क्रिया समुत्पद्यते तत्र तत्र प्रतिक्रियाऽपि। कर्मणा नूनमाविर्भवति संस्कारः संस्कारतश्च पुनः कर्मोत्पत्तिरपि निश्चितैव। अतो ब्रह्माण्डपिण्डात्मकसृष्टिनिदानं कर्मैवाभ्युपगन्तव्यम्। यथा खलु जीवः स्वपूर्वजन्मकृतकर्मानुसारेण स्वकीयं पिण्डाख्यं स्थूलं शरीरमधिगच्छति, तथैव ब्रह्माण्डस्यैकस्य

समष्टिभूतं कर्म यादृशं भवति तादृश एव संस्कारः समुत्पद्यमानो बोभवीति; तदनुरूपैव च भगवतो ब्रह्मणोऽन्तःकरणे सिसृक्षा जायते। सुतरां ब्रह्माण्डपिण्डात्मिका सृष्टिः कर्मैव निर्विभर्त्तीति ॥ २२ ॥

कुतः कर्मोत्पत्तिरित्यस्य रहस्यं व्याकरोति—

**कर्मणः प्राकट्यं ब्रह्मस्वभावात् ॥ २३ ॥**

ब्रह्मणः स्वभावत एव कर्मणः प्राकट्यं भवति। समाधिगम्यं रहस्यमिदमवगन्तुं भगवता श्रीकृष्णचन्द्रेण स्वीयमुखादेव गीतोपनिषदीत्थं प्रतिपादितम्। तथाहि—

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।**

निर्गलितार्थोऽयं यत् निर्विकारम्, अद्वैतसत्तायुक्तम् कर्मातीतम्, भावाद् बुद्धेरप्यतीतं यत् पदं तदेव अक्षरब्रह्मेति गीयते, तस्य च यः प्रकृतिरूपः स्वभावः स एव अध्यात्मेत्युच्यते। वस्तुतः स्वस्वभावस्वरूपा ब्रह्मणः प्रकृतिरेव अध्यात्मनाम्ना जेगीयते। तस्मात् स्वभावादेव कर्मणः साक्षात्सम्बन्धत्वात् कर्म ब्रह्मस्वरूपं सिध्यति। यथा लोके ह्येवमुच्यते यत् व्यक्तिविशेषस्यैतस्य स्वभावः प्रकृतिर्वा तादृगिति तथैवेदमवधेयं यत् ब्रह्मण तत्प्रकृतेश्च यो हि सम्बन्धः स एव ब्रह्मप्रकृतेः कर्मणश्च बोद्धव्यः। गीतायां श्रीभगवतापीत्थमेवोक्तम्—

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥**

एतदेव कर्मस्वरूपस्य ब्रह्मणो वैज्ञानिकरहस्यमवधेयमिति ॥ २३ ॥

फलतः—

**कर्मातो नित्यम् ॥ २४ ॥**

अतः कारणात् कर्मणो नित्यत्वम्। यदा हि ब्रह्मणः तत्स्वरूपायाः प्रकृतेश्चापि नित्यता, तदा ब्रह्मप्रकृतेः स्वतः प्रादुर्भूतं कर्मापि नित्यमेव। समष्टिस्वरूपं, व्यष्टिभूतं ब्रह्माण्डपिण्डयोरेकतरसम्बन्धयुक्तं वा कर्म प्रकृति-

सहजातत्वात् प्रवाहरूपेण नित्यं स्वतः सिद्धम्। सृष्टिप्रवाहोपरि विचारे क्रियमाणे सतीदं स्वीकर्त्तव्यमेव यत् यथा अन्योन्याश्रितौ बीजाङ्कुरौ प्रवाहरूपेणानादिस्वरूपौ तथैवाध्यात्मसृष्टिप्रवाहः कर्म चेत्युभयमेवानादिभूतमिति ॥ २४ ॥

कर्मणो नित्यत्वज्ञानं पुनः परिपोषयति—

**भूतभावकृद्विसर्गाच्च ॥ २५ ॥**

भूतानां यो भावस्तस्योद्भवकरो यो हि विसर्गस्तस्मात् कारणादपि कर्मणो नित्यत्वं सिद्धम्, भूतभावोद्भवकरेण विसर्गेण जीवोत्पत्तिरेव वेदशास्त्रेषु कर्मनाम्ना व्यपदिश्यते। भगवान् श्रीकृष्णो गीतोपनिषद्यपि सुस्पष्टमिदमुक्तवान् यत्—

**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥**

सुतरां ब्रह्मस्वभावात्मिका प्रकृतिस्तावदेव निजस्वरूपत्वं परिरक्षति यावदसौ न विकृतत्वमधिगच्छति। सर्वभूतेषु सर्वावस्थासु च तस्याः प्रकृतेः एकरसस्थायिनी दशैव तत्स्वभाव स्थायित्वसंरक्षिका। एतद्विरुद्धा तस्या द्वितीयदशा तु विकृतिरित्युच्यते। अतो भूतभावोद्भवकरी, तत्प्राकृतिकभावस्य स्वभावस्य वा त्यागिनी भूतसृष्टिकारिणी अवस्थैव कर्मोत्पत्तिनिदानभूता। वस्तुतः दशायामस्यामेव समुत्पन्नं कर्म जगतः सृष्टिस्थितिप्रलयं विधत्ते। विज्ञानमिदमन्यप्रकारतोऽपि बोध्यम्। त्रिविधानामपि सच्चिदानन्दभावानामेकतत्त्वमग्नां धारायां निदर्शयित्री दशैव विद्यादेवीदयोत्पन्ना अध्यात्मसंज्ञिता, यदा च तदेकतत्त्वावस्थातः सच्चिदानन्दाख्यत्रिभावसत्ता पूर्वोक्तस्वरूपा पृथगनुभूयते साऽवस्थैव ब्रह्मस्वस्वभाव विसर्गकारिणी सृष्टेः कारणम् भवति। एतदवस्थात एव कर्मण उत्पत्तिः, ततश्चाविद्याप्रभावाविर्भावः। अतिदुरूहो विषयोऽयमन्यविधयाऽपि वेदनीयः। स्वभावः प्रकृतिश्चेति पर्यायवाचकौ शब्दौ। लोकेऽपि "स्वभाव एतादृशोऽस्य" "प्रकृतिर्वाऽस्यैतादृशो" इतिवाक्यद्वयेन

अभिन्नार्थं एव भावो हृदयङ्गमो जायते। अतोऽत्र ब्रह्मस्वभाव एव प्रकृतिशब्दवाच्यः। सुतरां सच्चिदानन्दमय्या अद्वैतसत्तायाः प्राकट्यमेव स्वभावोऽध्यात्मभावो वा विद्यते। यदा च तस्यामद्वैतदशायां द्वैतो भावः समुत्पन्नः यर्हि वा प्रकृतिः साम्यावस्थातो वैषम्यावस्थां प्राप्ता, यदानीं च प्रकृतिस्त्रिगुणविकारतस्तरङ्गायिता बोभवीति, तदानी सैवावस्था भूतभावोद्भवकारिणी, तस्यामेव कर्मोत्पत्तिरिति ॥ २५ ॥

कतिविधं कर्मेति निरूप्यते—

**तत् त्रिविधं सहजैशजैवभेदात् ॥ २६ ॥**

सहजम्, ऐशं, जैवं चेति कर्म त्रिविधम्, त्रिप्रकारकमित्यर्थः। एतत् कर्मैव दृश्यप्रपञ्चमुत्पादयति। विकारभावापन्नायाः प्रकृतेरनन्तस्वरूपमिव कर्मस्वरूपस्याप्यानन्त्यम्। यथा च प्रकृतेरवस्थाविकृता गुणत्रयानुसारतस्त्रिविधैर्नामभिर्विभज्यते तथैवानन्तरूपधारिणः कर्मणोऽपि उपर्युक्तास्त्रयो भेदाः सन्ति। विकृत्यैव सह विद्यमानं सहजम्, सूक्ष्मस्वरूपाद् दैवजगत्सम्बद्धनिबद्धम् ऐशम्, बन्धनदशायामेव जीवानां स्थापयितृ जैवं कर्म तत्त्वदर्शिभिरुदीर्यते। विषयोऽयं शास्त्रेष्वपि प्रपञ्चितो निभाल्यते। तथाहि—

जैवेशसहजाख्याभिस्त्रिधा कर्म विभिद्यते।
आश्रित्य सहजं कर्म भुवनानि चतुर्दश॥
जायते च विराट् सृष्टिर्जङ्गमस्थावरात्मिका।
देवासुराधिकारेण द्विविधेन समन्वितम्॥
सञ्जुष्टं नैकवैचित्र्यैर्भूतसङ्घैश्चतुर्विधैः।
सहजाख्यं च कर्मैव ब्रह्माण्डं सृजते सुराः॥
कर्मभूमर्त्यलोकं हि जैवं कर्म दिवौकसः।
विविधानधिकारांश्च मानवानां यथायथम्॥
स्वर्नरकादिकान् भोगलोकांश्च सृजते पुनः।
सन्निघ्नं सहजं कर्म जैवं जानीत जीवसात्॥

जीवाः सन्ति पराधीनाः सहजे कर्मणि स्वतः ।
जैवे स्वाधीनतां यान्ति जीवाः कर्मणि निर्जराः ॥
सन्त्यतो मानवाः सर्वे पुण्यपापाधिकारिणः ।
आभ्यां विचित्रमेवेदमैशं कर्म किमप्यहो ।
साहाय्यमुभयोरेव कर्मैतत् कुरुते किल ॥ २६ ॥

विज्ञानमिदं परिपुष्यते—

## गुणभाववत् ॥ २७ ॥

गुणा भावाश्च यथा त्रिविधास्तथैव कर्मणोऽपि त्रैविध्यमित्यर्थः। त्रिगुणविकाराणामनेकत्वेऽपि तेषां सर्वेषामपि सात्त्विकराजसिकतामसिक-भेदेन त्रिधैव भेदः। यथा चान्तःकरणस्य भावराज्यमनन्तस्वरूपधारकं सदपि तदनन्तभावराज्यम् आध्यात्मिकाधिदैविकाधिभौतिकसंज्ञया त्रिविधं विभज्यते, तथैवानन्त्ये सत्यपि कर्मणः शृङ्खलाबद्धं स्वरूपं सहजम् ऐशं जैव-मिति त्रिधैव विभक्तम्। तदेतत् पूर्वदृष्टान्तमनुसृत्य युक्तिसंगतमेवेति ॥२७॥

प्रथमस्य स्वरूपं निर्दिशति—

## चतुर्दशभुवननिदानमाद्यम् ॥ २८ ॥

आद्यं सहजं कर्म चतुर्दशभुवनानां निदानं भवति। परिणामिन्याः प्रकृतेः सहोत्पन्नं सहजाख्यं कर्म प्रथमं हि चतुर्दशभुवनान्युत्पादयति। जैवसंस्कारमन्तरेणैव स्वतः प्राकृतिकस्पन्दनेनैव साकं सहजस्य कर्मणः समुत्पत्तिर्निभाल्यते। सर्गस्यारम्भकाले एतेनैव सहजेन कर्मणा अनन्त-कोटिब्रह्माण्डमयविराड्विशालवपुषि देशावच्छिन्ना विशेषता समुत्पद्यते। एतेनैव कारणेन प्रत्येकं ब्रह्माण्डस्य अङ्गस्वरूपाणि चतुर्दशभुवनानि, प्रत्यङ्गभूता अनेके लोका ग्रहोपग्रहास्तत्तज्जीवनिवासोपयोगिनः स्थूल-दृश्यप्रपञ्चास्तद्बलमाश्रित्य निर्मीयन्ते। स्वाभाविकः संस्कार इव सहजं कर्म स्वतः प्राकट्यमेति। परिणामशीला प्रकृतिः त्रिगुणकार्यजातं यथा स्वतः प्रसूते, तथैव सहजमेतत् कर्म स्वयमेव चतुर्दशभुवनानि प्रादुर्भा-

बयति। विज्ञानमिदं सम्यगवन्तुं सृष्टिरहस्यमवधारयितुमुचितम्। तथाहि (१) प्राकृतिकी लोकमयी सृष्टिः, (२) भगवतो ब्रह्मणः सम्बन्धिनी सृष्टिः, (३) ऋषीणां मानसी सृष्टिः, (४) जीवानां मैथुनी सृष्टिश्चेति सृष्टेश्चत्वारस्तराः सन्ति। ब्रह्मविष्णुमहेशाख्यत्रिमूर्त्तिप्राकटयपूर्वं सगुणस्य ब्रह्मणः प्रकृतिजनितस्वाभाविकचेष्टया यत् किल ब्रह्माण्डरूपमण्ड प्रसूयते सैव प्रथमा सृष्टिः। एतयैव सहजकर्मणः स्वाभाविकः सम्बन्धः। एतच्चतुर्विधसृष्टिसम्बधे। स्मृतिशास्त्रे प्रमाण यथा—

सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजा।
अप एव ससर्जादौ तासु बीजमवासृजत्॥
तदण्डमभवद्धैमं सहस्रांशु समप्रभम्।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥
तस्मिन्नण्डे स भगवान् उषित्वा परिवत्सरम्।
स्वयमेवात्मनो ध्यानात् तदण्डमकरोद् द्विधा॥
ताभ्यां स शकलाभ्याञ्च दिवं भूमिं च निर्ममे।
मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम्॥

अन्यच्च—

प्रजापतिरिदं सर्वं मनसैवाऽसृजत् प्रभुः।
तथैव वेदान् ऋषयस्तपसा प्रतिपेदिरे॥
आदिदेव समुद्भूता ब्रह्ममूलाऽक्षयाऽव्यया।
सा सृष्टिर्मानसो नाम धर्मतन्त्रपरायणा॥ २८॥

तस्य क्रियान्तरं व्याचष्टे—

## पञ्चकोषजननम्॥ २९॥

तच्च सहजं कर्म पञ्चानामपि कोषाणां जननं जनकं भवतीत्यर्थः। ब्रह्माण्डे यथा चतुर्दशभुवनानां प्रादुर्भावः सहजं कर्म द्वारीकृत्य जायते, तथैव पिण्डे तद्द्वारैव पञ्चकोषोत्पत्ति. स्वत एव बाभवीति, सर्गादौ सगुणे ब्रह्मणि "एकोऽहं बहु स्याम्" इति सिसृक्षा प्रादुर्भवात, तदानीमेव सहजेन

कर्मणा यथा चतुर्दशभुवनादयो जीववासोपयोगिनो लोकाः समुत्पद्यन्ते, तथैव चिज्जडग्रन्थिस्वरूपे जीवभावे प्राकट्यं गच्छति तदानीं सहैव सहजेन कर्मणा जीवानां भोगस्थलस्वरूपाः पञ्चकोषाः स्वत एव प्रादुर्भवन्ति। मानवदेवादिशरीराणि स्वस्वकर्मानुसारं लभ्यन्त इति सत्यम्, परमिदमवश्यमभ्युपगन्तव्यं यत् मनुष्येभ्यो निम्नकोटिषूद्भिज्जादि योनिषु तादृशपूर्वकर्मसम्भावना नास्त्येव। सुतरामिदं स्वतःसिध्यति यत् अहैतुकं सहजं कर्मैव जीवपिण्डे पञ्चकोषानुत्पादयति। अन्यदपीदं विचारणीयं यत् मनुष्यदेवतादिषु केवलं स्थूलशरीररूपिणोऽन्नमयस्य कोषस्यैव परिवर्त्तनं जायते, अन्ये चत्वारः कोषा यथापूर्वं तिष्ठन्त्येव क्रमशः समुन्नमन्तश्च भवन्ति। एतद्विज्ञानेनापि सिद्धान्तोऽयं परिपुष्टिं लभत इति ॥२९॥

अन्यदप्युच्यते—

शरीरत्रयहेतुश्च ॥ ३० ॥

तत् सहजं कर्म शरीरत्रयस्य हेतुभूतमप्यास्ते। यदि सहजकर्म पञ्चकोषनिदानं, तर्हि त्रिविधशरीरोत्पादकमपि सुतरां सिध्यति। पञ्चकोषा एव रूपान्तरेण त्रिविधशरीरस्वरूपेण परिणमन्ते। यथाहि अन्नमयः कोष एव स्थूलं शरीरम्, प्राणमयः, मनोमयः, विज्ञानमयश्चेति त्रयो मिलित्वा सूक्ष्मं लिङ्गं वा शरीरम् उच्यते। आनन्दमयः कोषश्च कारणशरीरेण सम्बध्नाति। अतः खलु सहजकर्मैव जीवत्रिविधशरीरोत्पादकमित्यङ्गीकारः समुचित एवेति ॥ ३० ॥

सहजस्य कर्मण. स्थूलक्रियादिग्दर्शनं कारयित्वा तस्य स्थूलां प्रक्रियां निर्दिशति—

तत्प्रकाशः स्त्रीशरीरे सतीत्वतः ॥ ३१ ॥

पातिव्रत्यद्वारा नारीदेहे तस्य सहजकर्मणः प्रकाशो भवति। यथाकिल ब्रह्माण्डस्य चतुर्दशभुवनानामाविर्भावः, मानवपिण्डाधस्तनस्वेदजाण्डजादियोनीनामधिगमश्च अहैतुकसहजकर्मणैव स्वाभाविकः, तथैव

नारीदेहे सतीत्वधर्ममनुसृत्य सहजकर्मप्रकाशो जायते। यतो हि स्त्रीशरीरे स्वभावतोऽभ्युदयनिःश्रेयसाधिगमः सतीत्वेनैव समुपलभ्यते। नार्या साकं मूलप्रकृतेः स्वभावसिद्धं साधर्म्यं निभाल्यते। मूलप्रकृतिर्यथा पराधीना परमपुरुषमुखापेक्षिणी परमात्मशक्तिस्वरूपिणी समाम्नायते, एतद्धर्माणां छाया स्त्रियामप्यवश्यम्भाविनी। यतः किल परमपुरुषस्य मूलप्रकृतेश्च छायास्वरूपा एव पुरुषधारा नारीधारा च सृष्टिप्रपञ्चेऽत्र विलसति। अस्वतन्त्रता-पतिनिर्भरतामूलकं सतीत्वं किल नारीजातेः स्वाभाविको धर्म इति सिध्यति। अतो नारीजातौ सतीत्वधर्मविकाशः सहजेन कर्मणैव सम्भवत इति ॥ ३१ ॥

तस्य साक्षात् फल निर्दिशति—

**तस्मात् पुरुषभावलाभः ॥ ३२ ॥**

ततश्च पुरुषभावस्याधिगमो भवति। पुरुषधाराप्राप्तिरेव नारीधाराया मोक्षपथाधिगतिः समाम्नाता। यथा किल सर्गारम्भे ब्रह्मप्रकृतिर्ब्रह्मतः पृथग् भवन्ती सृष्टि-स्थिति-लयान् विदधती महाप्रलयावस्थायां पुनरपि ब्रह्मणि विलीना निजाद्वैतं स्वरूपं प्रतिपद्यते, तथैव प्रथमं नारीधारा पुरुषधारामाश्रयति। तदनन्तरं च पुरुषधारा ब्रह्मसमुद्रे गत्वाऽद्वैतभावं भजते। सहजसतीत्वधर्मप्रभावतो नारी जन्मान्तरे पुम्भावं प्रतिपद्यमाना पुरुषधर्मानधिगत्य ज्ञानयज्ञप्रभावतः स्वस्वरूपापरनामकं मुक्तिपदं लभते। तत्र च सहजकर्मण एव महत्त्वम्। स्मृतिशास्त्रेऽप्युक्तम्—

**सत्प्रेम्णैव सती नरी ब्रह्मणि प्रकृतिर्यथा।**
**पत्यौ तन्मयतामेत्य पुरुषत्वं प्रपद्यते ॥ ३२ ॥**

द्वितीयं च तस्य साक्षात्फलमभिधत्ते—

**अद्वैतज्ञानकृत् पुरुषे ॥ ३३ ॥**

तत् सहजं कर्म पुरुषे अद्वैतज्ञानोत्पादकं प्रभवति। यथा किल नारी सहजकर्मलब्धेन सतीत्वधर्मेण पुरुषत्वमधिगत्य स्त्रीशरीराद् विमुच्यते,

यच्च सहजं कर्म चतुर्विधजीववर्गं समुन्नमयत् मानवयोनिमधिगमयति, तदेव पुनः तत्त्वज्ञानिनि पुरुषे अद्वैतज्ञानमुत्पादयत् तं च पुरुषं मुक्तिभूमिं प्रापयति। यथा नारीशरीरे सतीत्वधर्मबलेन स्वत एव जटिलावस्थातिक्रमेण सहजकर्मण उदयेन मुक्तेः पन्थाः सरलायते, तथैव पुरुषशरीरेऽद्वैतज्ञानस्योदयेन कर्मणा जटिलत्वं दूरीभवति मुक्तिमार्गश्च सरलः सम्पद्यते। साधारणो मानवः धृतिक्षमादिसाधारणधर्मान् वर्णाश्रमादिविशेषधर्मानाश्रयन् क्रमशः जन्मान्तरेषु शूद्र-वैश्य-क्षत्रिय-ब्राह्मणत्वं भजमानः ततश्च कर्मी उपासकः, ज्ञानी, वेदज्ञः, तत्त्वज्ञश्च भूत्वाऽग्रेसरन् अद्वैतज्ञानप्रतिष्ठाद्वारा सहजकर्मणः परया काष्ठया जीवन्मुक्तिपदमासादयति ॥ ३३ ॥

विज्ञानमिदं विशेषतः सरलीक्रियते—

**जीवभावभावकं कैवल्यकारणं च ॥ ३४ ॥**

तत् सहजं कर्म जीवभावस्योद्भावकं कैवल्यस्य कारणं चापि प्रणिगद्यते। सहजं कर्मैव प्रकृतेः स्वाभाविकेन हिल्लोलेन साकं चिज्जडग्रन्थिरूपं जीवत्वमुत्पादयत् क्रमशश्च जीवमग्रेसारयत् मानवशरीरं प्रापयति, जीवन्मुक्तमहापुरुषे समुदीयमानं च जीवं बन्धनान्मोचयति। अन्यच्च पूर्वोक्तप्रकारं स्त्रीधारां पुरुषधारायां परिणमयत् पुरुषधारां च ब्रह्मसमुद्रे सम्मेलयति। सहजकर्मण एवेदं वैचित्र्यं यत् तद्धि जीवभावमुत्पादयति, जीवस्य क्रमोन्नतिमार्गं सरलीकुरुते, अन्ते च जीवन्मुक्तपदवीमारोप्य जीवं बन्धनान्मोचयति ॥ ३४ ॥

इदानीं कर्मविभागान्तरस्वरूपं निर्णयति—

**मनुष्यवर्ष्मजं जैवमधिकारित्वाद्धर्माधर्मयोः ॥ ३५ ॥**

धर्माधर्मयोरधिकारित्वात् जैवं कर्म मानवदेहजं निर्णीतम्। उद्भिज्जादिनिम्नयोनितोऽग्रेगच्छन् जीवो मनुष्यशरीरमधिगत्य स्वाधीनो जायते। तदानीमेव पापपुण्यप्रसवकारि जैवं कर्म प्रादुर्भवति। एतदेव

गमागमचक्रस्य हेतुतां भजते। अस्वाभाविकं हि तत्। अतो हि यदा जीवः स्वाभाविकीं गतिमतिक्रामन् मानवयोनौ गमनागमनचक्रोत्पादिकां पुण्यपापप्रकटयित्रीम् अस्वाभाविकीं कृत्रिमगतिमाप्नोति, तदैव जैवकर्मोदयः। जैवकर्मणैव जीवो निरन्तरं गतागतचक्रे परिभ्राम्यति ॥ ३५ ॥

कर्मविभागस्य तृतीयं स्वरूपं निरूपयति—

**ऐशमुभयसहायकम् ॥ ३६ ॥**

ऐशं कर्म उभयसहायकं निर्दिष्टम्। स्थूलप्रपञ्चस्य चालकं दैवं राज्यम्। तेनैव ऐशकर्मणः सम्बन्धत्वात् तदुभयसहायकम्। चतुर्विधभूतसंघस्य, आर्यानार्यमानवसंघस्य, स्थावरजंगमप्रपञ्चस्य वा सर्वस्यापि मूलरक्षकं चालकं च दैवं राज्यमेव। सुतरां येन कर्मणा दैवं राज्यं परिचाल्यते तत् किलैशं कर्म प्रणिगद्यते। अतो दैवराज्यसम्बन्धनिबद्धमैशं कर्मोभयसहायतां विधत्ते। तेनैशेन कर्मणा सहजकर्मणो जैवकर्मणश्च साहाय्यमधिगम्यते। उदाहृत्याऽवगन्तव्यमिदं यद् यदि सहजकर्मसम्बन्धयुक्तानाम् उद्भिज्जस्वेदजादियोनीनां रक्षकाश्चालकाश्च देवा न स्युस्तर्हि तत्सुव्यवस्थाया अभावः प्रसज्येत, जैवकर्मसम्बन्धमानवादीनां गमनागमन-कर्मपरिपाकादिव्यवस्थाऽप्यसम्भवैव भवेत्। अतो ह्यैशं कर्मोभयसहायकमित्यत्र नास्ति शङ्कावसरः ॥ ३६ ॥

तद्वैशिष्ट्यमुपवर्णयति—

**तत् समष्टिव्यष्टि मिश्रम् ॥ ३७ ॥**

तत् ऐशं कर्म समष्टिव्यष्टिमिश्रञ्चेति त्रिविधभावयुक्तं भवति। ऐशस्य कर्मणो वैशिष्ट्यमिदं यत् ब्रह्माण्डसहायकत्वात् समष्टिभावयुक्तं पिण्डसाहाय्यकर्तृत्वाच्च व्यष्टिभावोपेतम् उभयसहायतासम्पादकत्वाच्चोभयभावान्वितं च, एवमधिकारविस्तृतिर्हि तद्वैशिष्ट्यं व्यनक्ति। उदाहृत्येदमवधेयं यत् यदा देवैः साक्षाद्रूपेण तादृशशुभाशुभफलयुक्तकार्य

क्रियमाणं स्यात् येन केवलं ब्रह्माण्डस्यैव शुभमशुभं वा सम्भवेत् तर्हि तत् समष्टिभावयुक्तमुच्यते। यदि च तादृशशुभाशुभफलोत्पादिकाभिः दैवीभिः क्रियाभिः केवलं कस्यचित्पिण्डविशेषस्य शुभाशुभभोग-सम्प्राप्तिस्तर्हि क्रिया कलापोऽसौ व्यष्टिभावयुक्तोऽवधेयः। तद्वदेव यस्य फलविशेषस्य प्रभावो ब्रह्माण्डपिण्डयोरुभयोरुपरि निपतति तन्मिश्रमित्युच्यते ॥ ३७ ॥

## अतोवैचित्र्यमस्य। ३८ ॥

अस्मात् कारणात् अस्य ऐशकर्मणो वैचित्र्यमस्ति। सहजकर्मणः साक्षात् सम्बन्धः प्रकृत्याः स्वाभाविकैस्तरङ्गैः सह निभाल्यते जैवकर्मणश्च केवलं मनुष्याणां स्वकीयसंस्कारैः सार्कं सम्बन्धो दृश्यते। परन्तु ऐश-कर्मणः सम्बन्धः परोक्षरूपेणोभाभ्यामपि विलोक्यते। अतः पूर्वसूत्र-मनुसृत्य उभयोर्व्यष्टिसमष्ट्योः साहाय्यकरत्वादैशस्य कर्मणो वैचित्र्यमव-गन्तव्यम्। एतस्य प्रधानकारणमेतद् यत् स्थूलप्रपञ्चचालकं दैवं जगदेव। सर्वविधकर्मफलमूले देवानां साहाय्यं विद्यते। कर्मणो जडत्वाद् विभिन्ना देवगणाः कर्मफलोत्पादने प्रधानसहायकाः सन्ति। अन्यथा जड़स्वरूपं कर्म चेतनरूपाणां देवानां साहाय्यमन्तरेण फलोत्पादने नितरामसमर्थ-मेव ॥ ३८ ॥

इदानीमैशकर्मणो विस्तारप्रमाणानि दीयन्ते—

## मानवाद् देवोऽपि ॥ ३९ ॥

ऐशेन कर्मणा जीवो मानवाद् देवोऽपि भवितुमर्हतीत्यर्थः। ऐश-कर्मणः सामर्थ्यं सम्बन्धश्च सुमहान् विस्तृतः। मानवाः सुरत्वं भजन्त इत्यस्य प्रत्यक्षप्रमाणम्। यो हि मनुष्यो नैजं कर्म समुन्नमयन् देवाधि-कारयोग्यतां बिभर्त्ति, स किल मनुष्यत्वमपहाय देवत्वमधिगच्छति। वस्तुतस्तु ये जीवा देवलोकमासाद्य महत्त्वपरिपूर्णानि दैवपदानि समधि-गच्छन्ति ते किल पूर्वं मानवा एवासन्। यथा हि मानवयोनिर्मनुष्येतर-

निम्नयोनीनां चरममुन्नतिस्थानम्, तथैव मनुष्यत्वप्राप्तिमन्तरा देवत्वाधिगमोऽप्यसम्भव एव, सुतरामैशं कर्म जैवकर्मणा स्वसम्बन्धं संस्थाप्य मानवं देवत्वमधिगमयति। इदं किलैशकर्मणो विस्तारस्य समुन्नतेश्च सुमहत् प्रमाणमवगन्तव्यम्। महाराजसुरथस्य मनुष्यत्वानन्तरं मनुपद-स्वरूपदेवत्वाधिगमः, नन्दिनः मानवविग्रहात्परं देवपदप्राप्तिः, नहुषस्य राज्ञो महेन्द्रत्वलाभः गण्डक्या वेश्यायाश्च गण्डकीनामकनद्याः अधिदैव-रूपतया देवीत्वाधिगतिश्चेत्यादीनि स्मृतिशास्त्रेष्वनेकानि प्रमाणानि समुपलभ्यन्ते। ऐशकर्मविषये मनुष्यस्य देवत्वप्राप्तिवैलक्षण्यप्रतिपादकोऽपि शब्दः सूत्रेऽत्र निर्दिष्टो वेदितव्यः॥ ३९॥

## तत्प्रकाशो मुक्तावतारेषु॥ ४०॥

तस्यैशकर्मणः प्रकाशः प्राकट्यं मुक्तेषु अवतारेषु च संजायते। एतदैशकर्मस्वरूपपरिपुष्ट्यै, मानवशरीरे तत्सम्बन्धः कया रीत्या सम्भवतीत्येतस्य सरलतया प्रदर्शनाय चेदमुच्यते यन्मानवः समुन्नतो-भूत्वा जन्मान्तरीयोग्रशुभकर्मणाऽवतारत्वमधिगच्छति, अर्थात् तत्पिण्डम-मवतारशक्तिमासादयितुमर्हतां लभते, किम्वा तज्जीवन्मुक्तित्वमुपैति तदा तत्र पिण्डे स्वत एव स्थापितो भवति ऐशकर्मणा सम्बन्धः। जीव-न्मुक्तमहापुरुषेषु लोकोपकारिण्या इच्छाशक्तेः क्रियाशक्तेश्च प्रादुर्भाव ऐशकर्मसम्बन्धसम्वलित एवेति मन्तव्यम्। वस्तुतस्तु देवर्षिपितृगणा जीवन्मुक्तान् महात्मनो द्वारीकृत्य स्वीयां क्रियाशक्तिं सञ्चालयन्ति, स्वकी-येच्छाशक्तिद्वारा च स्वान् स्वान् प्रतिनिधीन् कुर्वन्तो नैजं कार्यकलापं समनुष्ठापयन्ति। जीवन्मुक्ते पराशरमहर्षौ दैव्या इच्छाशक्तेः क्रिया-शक्तेश्च प्रयोगेण श्रीमद्भगवद्व्यासपिण्डोत्पादनं पितरः कारयाञ्चक्रुः, अत एव कारणाद् व्यासस्य भगवतो जन्म लोकोत्तरभावपरिपूर्णं निभाल्यते। जीवन्मुक्तेन दुर्वाससा महर्षिणा पौराणिकयुगे देवानां शुभा-शुभकर्मानुष्ठापनम्, आधुनिके युगे च जीवन्मुक्तश्रीशङ्कराचार्यशरीरद्वारा विविधदैवशुभकर्मणां दैवप्रेरणया सम्पादनं चैतस्य समुज्ज्वलो दृष्टान्तः।

नित्यानाम् ऋषीणाम् इच्छाशक्ति-क्रियाशक्तिप्रयोगतस्तु संसारेऽत्र पतञ्जलि-व्यास-याज्ञवल्क्यवशिष्ठादीनां जीवन्मुक्तमहापुरुषाणामनेकान्युदाहरणानि लोकप्रसिद्धानि। अवतारेष्वपि च दैवीनां इच्छाशक्तिक्रियाशक्तीनां प्रकाशस्तु स्वतः सिद्ध एव। यतो हि लोकोत्तरदैवकार्यसम्पादनार्थमेवावताराणामाविर्भाव इति॥ ४०॥

त्रिषु प्रथमस्य स्वाभाविकीं गतिमुपवर्णयति—

सहजमूर्द्ध्वगम्॥ ४१॥

सहजं कर्म ऊद्ध्र्वगामि वेदितव्यम्। सहजकर्म ब्रह्मप्रकृतेः स्वीयस्वभावसम्बद्धं सत् प्राकट्यमवाप्नोति, अतस्तद्गतिरूद्ध्र्वगामिनी। ब्रह्मप्रकृतिर्हि व्यक्तावस्थातोऽव्यक्तावस्थाम् अव्यक्तावस्थातश्च व्यक्तावस्थां भजते। यथा च भगवता श्रीकृष्णेन गीतोपनिषदि स्वमुखत एव व्याहृतम्, तथाहि—

अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे॥

विज्ञानमिदं प्रकारान्तरेणाप्यवगन्तुं शक्यते। तथा हि ब्रह्मतः प्रकृतिः पार्थक्यमासाद्य त्रैगुण्यहेतुना विकारं प्राप्नोति पुनश्च प्रकृतिस्था भूत्वा ब्रह्मणि विलीयते। सुतरां परमपुरुषभोगहेतवे प्रकृतिः परमपुरुषतः पृथग् भवन्ती संसारं सृजति समुत्पादयति चानन्दविलासम्, अनन्तरं क्षणाद्-ऊर्ध्वमेव निखिलमपि दृश्यप्रपञ्चमात्मनि विलयं कुर्वाणा ब्रह्मणि विलीयते। प्रकृतेरेतत्स्वभावानुसारतः सहजकर्मस्वभावोऽपि निर्मीयते। यतो हि प्रकृतिसहजातं सहजकर्म भूतभावोद्भवकरेण विसर्गेण जीववर्गमुत्पादयति। ततश्च चिज्जडग्रन्थिसम्भूतो जीवः सहजकर्मबलेन नियमतः क्रमाभ्युदयं

प्राप्नोति। यतश्च प्रकृतिसहजातत्वात् सहजं कर्म प्रकृत्या सहैव व्यक्तं-भवत् ब्रह्मणि प्रकृतेर्विलयस्य कारणतां भजते। प्रकृतिश्च ब्रह्मणो व्यक्ततां गच्छन्ती पुनर्ब्रह्मण्येवाव्यक्तभावाधिगमाय स्वस्वरूपाभिमुखमग्रेसरन्ती पुनरन्ते ब्रह्मण्येव निलीयते। इममेव वैज्ञानिकं सिद्धान्तमनुसृत्य सहजं कर्म स्वयं प्रकृतेः समुत्पद्य स्वभावतः प्रकृतिसम्भूतभूतग्रामं समुन्नयत् प्रकृतावेव विलीनतां गच्छति। अत एव सहजस्य कर्मणो गतिः सदैवोर्द्ध्वगामिनी तिष्ठति। उदाहरणरूपेणेदमवगन्तव्यं यत् उद्भिज्ज-स्वेदजाण्डज-जरायुजाख्यचतुर्विधपिण्डेषु सहजकर्मणो नियमितोर्द्ध्वगामिनी स्वाभाविकगति सुस्पष्टतः प्रतीयते। यतो हि चतुर्विधभूतयोनिषु जीवो निर्बाधम् उन्नतकर्माभिमुखं निरन्तरमग्रेसरति। पुनश्च अनार्यत्व-मनुष्यत्वचातुर्वर्ण्य-चतुराश्रमत्व-देवत्वादिषु निर्बाधसमुन्नतिशीला गतिः सहजकर्मप्रभावत एव सम्भवति। प्रकृतिसहजातत्वेन सहजकर्मगतिः सर्वत्रैव विद्यमाना निभाल्यते, सहजकर्मणोऽवलम्बनेव धर्माचार्यैः कर्मकाण्डे निष्कामयज्ञस्य, उपासनाकाण्डे पराभक्तेः, ज्ञानकाण्डे च ब्रह्मसद्भावस्य चाधिकाराः सुनिर्णीताः सन्ति ॥ ४१ ॥

द्वितीयस्य स्वाभाविकी गतिरुच्यते—

**जैवमधोगम् ॥ ४२ ॥**

जैवं कर्माधोगामि विद्यते। सहजं कर्म प्रकृत्या सहोत्पद्यमानं जीवं यथोच्चैर्नेनीयते न तथा जैवं कम। मानवयोनौ जीवपिण्डस्य प्रभुत्वं कर्त्तुकर्त्तुमन्यथा कर्त्तुं वा सामर्थ्य प्राप्तस्य प्रकृतिर्विकृतित्वमापद्यते। अतो विकृतिजन्यं कर्म इन्द्रियसम्बन्धेन निम्नगमनशीलं बोभवीति, वस्तुतः सहजं प्रकृतिसहोत्पन्नं जैवं च विकृतिसहजातमभिधेयम्। सहजं कर्म नियमितरूपेण स्वस्वरूपाभिमुखं नयति, जैवं तु जीवं बन्धने निगडयत् गमनागमनचक्रे भ्रामयति। सहजस्य कर्मणो गतिः सहजा जैवस्य च कुटिला। अतो जैवं कर्म निरन्तरं जटिलत्वमासादयत् जीवं चासक्तिपाशे पातयित्वा तदीयपतनकारणतामापद्यते ॥ ४२ ॥

प्रकृतिविज्ञानोपक्रमे वर्णाश्रमस्यावश्यकत्वं प्रदर्शयति—

**वर्णाश्रममपेक्ष्यं तन्निवृत्तये ॥ ४३ ॥**

तस्य निवृत्तये जैवकर्मपाशबन्धननाशायेत्यर्थः वर्णाश्रधर्मस्यापेक्षा विद्यते, जीवः सहजकर्मक्रमोन्नतिप्रदायिनी शक्तिमनुसृत्य निर्बाधरूपेण क्रमतः समुन्नमन् मानवयोनिमासादयति। मानवशरीरे च पापपुण्याधिकारमापद्य पूर्णावयवजीवो मानवः स्वशरीराधीश्वरो भूत्वा इन्द्रियेष्वासक्तो निजोद्ध्वंगतिं विरहन् नीचैः पापत्यते। अस्यां दशाया तेन यद्यसाधारणी सहायता न लभ्येत; तर्हि तत्क्रमोन्नतिश्चिराय निरुध्यते, तदीयां निम्नप्रवणां गतिं निरुध्य यथायोग्यं तमूर्ध्वगतौ नियोजयितुं वर्णाश्रमपालनपूर्वकं मानवो वारंवारमार्यजातौ जन्म गृह्णन् स्वकीयम् ऊद्ध्वंगामिजीवनस्रोतसः स्थायित्वं सम्पादयन् जैवकर्मणो जटिलत्वदूरीकरणे सामर्थ्यं लभते! शास्त्रविज्ञानमिदमनुमोदमानेन चैकमौपनिषदिक दृश्यमुपवर्णयता भगवता श्रीशम्भुना निजमुखेन प्रोक्तम्, तथाहि—

श्यामायाः प्रकृतेर्मे स्तो द्वे रूपे परमाद्भुते।
यतः सैव जडा जीवभूता चैतन्यमय्यपि॥
अज्ञानपूर्णरूपेण जडरूपं धरन्त्यसौ।
सृष्टिं प्रकाशयेच्छश्वन्नात्र कश्चन संशयः॥
असौ चैतन्यपूर्णा च भूत्वा स्रोतस्विनी मम।
स्वस्वरूपात्मके नित्यं पारावारे विशत्यहो॥
सरिन्निर्गत्य चिद्रूपा सा महाद्रेर्जडात्मकात्।
उद्भिज्जे स्वेदजे चैवमण्डजे च जरायुजे॥
सलीलं खातरूपेऽलं प्रवहन्ती स्वधाभुजः।
मर्त्यलोकाधित्यकायां निर्बाधं व्रजति स्वयम्॥
तस्या अधित्यकाया हि निम्नस्थाश्चैकपाश्वंतः।
उपत्यका महत्यश्च विद्यन्ते गह्वरादयः॥

यत्र तस्याः पवित्रायास्तरङ्गिण्या जलं स्वतः ।
स्थाने स्थाने वहन्नित्यं निर्गच्छति स्वभावतः ॥
अव्याहतं च नीरन्ध्रमविच्छिन्नं निरापदम् ।
स्रोतस्तन्नितरां कृत्वा नदीधारां धरातले ॥
विधातुं सरलां सौम्यामष्टबन्धाः स्वधाभुजः ।
धर्मा वर्णाश्रमा एव निर्मिता नात्र संशयः ॥
त्रिलोकपावनी दिव्या सा नदी सुगमं हितम् ।
पन्थानमवलम्ब्यैव परमानन्दलब्धये ॥
मयि नित्यं प्रकुर्वाणा प्रवेशं राजतेतराम् ।
नैवात्र विस्मयः कार्यो भवद्भिः पितृपुङ्गवा ! ॥
निर्जरा निखिलास्तस्यां नद्यामानन्दपूर्वकम् ।
सर्वदैवावगाहन्ते लभन्तेऽभ्युदयं च ते ॥
उभयोस्तटयोस्तस्याः समासीना महर्षयः ।
ब्रह्मध्याने सदा मग्ना यान्ति निःश्रेयसं पदम् ॥
यूयं दार्ढ्याय बन्धानां तेषां चैव निरन्तरम् ।
रक्षितुं तान् प्रवर्त्तन्ते पार्श्वमेषामुपस्थिताः ॥
भवतामत्र कार्ये च विश्वमङ्गलकारके ।
सदाचारिद्विजाः सन्ति सत्यो नार्य्यः सहायिकाः ॥ ४३ ॥

वर्णाश्रमशृङ्खलाया आधारभित्तिं निर्दिशति—

सतीत्वमूलं तत् ॥ ४४ ॥

तत् वर्णाश्रमशृङ्खलाधारभित्तिरूपं सतीत्वमूलमवगन्तव्यम् । सत्या भावः सतीत्वं तदेव मूलं यस्येति तत् । वर्णाश्रमभित्तिविज्ञानं हृदयङ्गमं विधातुं पूज्यपादेन महर्षिणा सूत्रकारेण सर्वप्रथममिदमभिधीयते यद् विचारतो दृश्यमाने सति सतीत्वमेव वर्णाश्रमशृङ्खलामूलं सिध्यति । आश्रमधर्ममूलो वर्णधर्मः, तस्य च मूलभूता रजोवीर्यशुद्धिः तस्याश्च शुद्धिमूलो नारीजातौ त्रिलोकपवित्रकरः सतीत्वधर्म एव । यद्यपि गृहस्थाः

सदाचारिणो भवेयुः, पुरुषाश्च संयमिनः स्युः किन्तु यदि नार्यः स्वीयतपोधर्मसंरक्षणं न कुर्युस्तर्हि वर्णाश्रमपवित्रता, तदीयशृङ्खला च विनाशमुपगच्छेत्। अन्यच्चेदमवधेय यत् पुरुषस्य कदाचारस्तदीयं व्यक्तित्वं विगुणयति स्त्रियास्तु तद्व्यक्तित्वं तदीयां सन्तानपरम्परां, कुलं जातिम्, सर्वामपि वर्णाश्रमशृङ्खलां भ्रष्टतामानयति। जातिशुद्धिः क्षेत्रशुद्धिप्रधाना, सन्तानस्य संस्कारशुद्धिर्जनन्याः संस्कारशुद्धिं विशेषतो निर्विभर्त्ति, फलत एतत् सिध्यति यद् वर्णाश्रममूलं नारीजातेः सतीत्वमेवेति ॥ ४४ ॥

अन्यच्चाभिधत्ते—

## शुद्धिः स्कन्धः ॥ ४५ ॥

यदि वर्णाश्रमधर्मं एको वृक्षो मन्येत तर्हि नारीजातौ सतीत्वं तस्य मूलम् रजोवीर्यशुद्धिश्च तस्य स्कन्धो वेदनीयः। वृक्षं स्कन्धो यथा संरक्षति तथैव पितृप्राप्तशुद्धवंशपरम्परागतवीर्यशुद्धिः, पवित्रक्षेत्रस्वरूपमातृपरम्पराप्राप्तरजः शुद्धिश्चेति द्वयं वर्णाश्रमस्वरूपकल्पवृक्षस्य स्कन्धरूपमवगन्तव्यम्। संस्कारपादे सम्यक् सिद्धान्तितमिदं यत् रजोवीर्यद्वारोभयविधसंस्कार आकृष्यते। एवमुभयविधशुद्धसंस्कार-परम्पराक्रमप्राप्तेन सृष्टिकालारम्भत एव बोभूयमानेनाकर्षणेन वर्णाश्रमशृङ्खलामय्यार्यजातिः नाशशीलेऽपि संसारेऽत्र चिरजीविनी तिष्ठति। तस्मात् रजोवीर्यशुद्धिर्हि वर्णाश्रमवृक्षस्य स्कन्धरूपा भवति ॥ ४५ ॥

अन्यच्च—

## शृङ्खला शाखा ॥ ४६ ॥

तस्य वृक्षस्य वर्णाश्रमशृङ्खला शाखा स्वरूपा। वर्णाश्रमधर्मपरिपालनार्थं महर्षिप्रवरैर्दार्शनिकयुक्तिपुरस्सरं सुनिबद्धा शृङ्खला एव वृक्षस्यास्य शाखाः समाम्नाता। वृक्षस्य विस्तृतिः तस्याश्चास्तित्वं यथा शाखाभिः सुरक्ष्यते तथैव नानाप्रकारस्वरूपाभिः वर्णाश्रमशृङ्खलाभि

वर्णाश्रममहत्त्व परिरक्ष्यते । समाजदण्ड-राजदण्डशास्त्रविचार-धर्माधर्म-सद्विचारादीना नाशेन भ्रंशेन वा सैव शृङ्खला वर्णाश्रमं परिरक्षति ॥४६॥

अन्यदपि—

## सदाचारः पत्रम् ॥ ४७ ॥

तस्य वर्णाश्रमकल्पद्रुमस्य सदाचाराः पत्राणि, यथाहि पत्रैर्वृक्षः परिचीयते पूर्णत्वं वाऽधिगच्छति, तथैव वर्णोचितैराश्रमोचितैश्च परिपालितैः सदाचारैर्ब्राह्मणक्षत्रियादयो वर्णा ब्रह्मचर्यगार्हस्थ्यादय आश्रमाश्च परिचीयन्ते तन्मर्यादाऽक्षुण्णा तिष्ठति चेति ॥ ४७ ॥

अन्यच्चापि—

## पुष्पमभ्युदयः ॥ ४८ ॥

अभ्युदयः लौकिकपारलौकिकोन्नतिस्तस्य पुष्पमवगन्तव्यम् । वृक्षाणां पुष्पाणि यथा फलोत्पत्तिहेतुतां भजन्ते, तथैव निःश्रेयसस्वरूपं मुक्तिफलमासादयितुं वर्णाश्रमधर्मा नियमितरूपतोऽभ्युदयं ददज्जीवं मुक्तिपद प्रापयति। अभ्युदयो द्विविधो लौकिकः पारलौकिकश्च। वर्णाश्रमधर्माचरणेन स्वत एव जीवोऽभ्युदयं समधिगच्छति। सुकौशलपूर्णरीतिनिर्मितवर्णाश्रम-शृङ्खलानिबद्ध-तत्सदाचारं यथाक्रमपरिपालनेन जीवक्रमाभ्युदयो निश्चित एव। अन्यच्च यथा किल पुष्पस्य शोभासुगन्धद्वारा सर्वे प्रसीदन्ति, तदीयनिर्गतमधुना आमानवलोकाद् देवलोकं यावत् सर्वेषां तृप्तिः सम्पाद्यते, तथैव वर्णाश्रमव्यवस्थया देवर्षिपितृवर्गाः कथं तृप्तिमवाप्नुवन्तीति पूर्वमेव सुविवेचितम् । फलतः पुष्पाभ्युदयदृष्टान्तो युक्तिसंगत एवेति ॥ ४८ ॥

अपरमप्यभिधत्ते—

## कैवल्यं फलम् ॥४९॥

कैवल्यं मुक्तिः तस्य फलम्। वर्णाश्रमधर्मपरिपालनेन स्वत एव कैवल्यरूपं फलमासाद्यते। यथा हि वृक्षे पुष्पत एव फलमुत्पद्यते तथैव

वर्णाश्रमपरिपालनेन क्रमाभ्युदयं प्राप्तवतो जीवस्य कैवल्याधिगमो भवत्येव। जन्मजन्मान्तरेषु वर्णाश्रमधर्मद्वारा क्रमाभ्युदयस्तु निश्चित एव। ब्राह्मणक्षत्रियवैश्यशूद्रेषु मोक्षधर्मार्थकामव्यवस्था चरितार्थतायाः सुकौशलपूर्णप्रक्रिया निर्धारितैवास्ते। आश्रमेषु चादिमद्वये प्रवृत्तेरन्तिमद्वये च निवृत्तेश्चरितार्थतायै शृङ्खला निर्णीता विद्यते। एवं प्रकारेण जीवो वर्णाश्रमधर्मं परिपालयन् अन्ते नूनमेव कैवल्यभूमिमासादयति। मुक्तिकृते नास्ति तस्य स्वतन्त्रोद्योगस्यावश्यकतेति ॥ ४९ ॥

सम्प्रति वर्णाश्रमशृङ्खलोपवर्ण्यते—

**अधिभूतशुद्धिनाशकोऽसवर्णोद्वाहः ॥ ५० ॥**

असवर्णविवाहोऽधिभूतशुद्धिविनाशको ज्ञातव्यः। वर्णाश्रमशृङ्खला-मूलाधारभित्तीनां सविस्तरं स्वरूपवर्णनमनुष्ठाय तदीयशृङ्खलास्वरूपमुप-वर्ण्यते। अत्र स्ववर्णोद्वाह एव तदीयसंरक्षणहेतुः। असवर्णविवाहेन तस्या शुद्धिर्विनश्यति। वर्णाश्रमशृङ्खलायाः सर्वप्रथमोऽयं राद्धान्तो यत् स्ववर्णोद्वाहोऽनुष्ठेयस्तद्विरोधी परित्याज्यः। संसारेऽत्र प्रबलं हि स्त्रिया आकर्षणम्। तस्या मोहमयाकर्षवशीभूतत्वाज्जातेः शुद्धतासंरक्षिण्याः शृङ्खलायाः प्रणाशो न भवेदशुद्धताद्वारनिरोधः सम्पद्येत, येनार्यजाति-रमरीभावत्वं प्रपद्येत। अतः कारणादेतत्सूत्राविर्भावः ॥ ५० ॥

अन्यदपि—

**गुणपरिपन्थी च ॥ ५१ ॥**

असवर्णविवाहो गुणानां सत्त्वरजस्तमसां परिपन्थी विरोधी भवति। स च वर्णान्तरेण सह सांकर्यमुत्पाद्य शुद्धिनाशकस्तु वर्तत एव स च गुणानामपि बाधकः। गीतोपनिषदि भगवता श्रीकृष्णेनाप्युक्तम्, यत्—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्म विभागशः" इति।

परमेश्वरानुष्ठितचतुर्वर्णसृष्टौ गुणसंविभागोऽप्येको हेतुः, सत्त्वप्रधाना ब्राह्मणाः, सत्त्वरजः प्रधानाः क्षात्रयाः, रजस्तमः प्रधाना वैश्या,

तमः प्रधानाः शूद्राश्चेति समाम्नाताः। एतत् त्रिगुणाकर्षणं रजोवीर्यद्वारा सम्पद्यते। शरीरस्य त्रिगुणाधारत्वात् ऋते रजोवीर्यविशुद्धेस्त्रिगुण-तारतम्यं समुचितरूपेणाकृष्टं सत् स्थापितं भवितुं नार्हति। अतोऽङ्गी-कर्त्तव्यमेव यदसवर्णोद्वाहो गुणसंग्रहबाधक इति ॥ ५१ ॥

सम्प्रति द्वितीयश्शृङ्खलासिद्धान्तः प्रतिपाद्यते। कश्चोद्वाहो वर्णाश्रम-शृङ्खलाघातक इत्यप्युच्यते—

**तत्र वर्णाश्रमशृङ्खलाघाती विलोमः ॥ ५२ ॥**

विलोमोद्वाहो वर्णाश्रमशृङ्खलाया घातको वेद्यः, सवर्णवरकन्यापरिण-योऽत्र सर्वश्रेष्ठः। निम्नवर्णकन्यया उच्चवर्णपुरुषविवाहोऽनुलोम उच्यते। असावपि शास्त्राकारैरङ्गीकृतः। किन्तूच्चवर्णकन्यया नीचवर्णपुरुष-विवाहो विलोमाभिधः, स तु वर्णाश्रमशृङ्खलाघातको ज्ञातव्यः। समुन्नत-वर्णनारीरजो निम्नवर्णपुरुषवीर्यसंश्लिष्टमाध्यात्मिकीं हानिमापादयति, किन्त्वेतद्विपरीतम् अर्थात् निम्नवर्णस्त्रीरज उत्तमवर्णपुरुषवीर्यमिश्रं सत् न तथाऽऽध्यात्मिकहानिकरमिति वेद्यम्। अतो विलोमसृष्टिरधोगामिनी-त्वात्पापवृद्धिकारणतां भजते। एतया किल वर्णाश्रमशृङ्खला वैगुण्य-मापद्यते ॥ ५२ ॥

स्वसिद्धान्तपुष्ट्यै प्रकारान्तरमभिधत्ते—

**नानुलोमस्तथा ॥ ५३ ॥**

अनुलोमोद्वाहस्तादृशो न भवति। अत्र हि निम्नवर्णनारीरजसोच्च-वर्णपुरुषवीर्यं न तथाऽपवित्रमाध्यात्मिकहानिकरं च समाम्नायते। अतोऽ-नुलोमो न तथा वर्णाश्रमशृङ्खलाविशेषबाधक इति ॥ ५३ ॥

अनुलोमस्य गौणत्वमभिधत्ते—

**तज्जः सर्गो मातृजातीयः ॥ ५४ ॥**

तेनानुलोमविवाहेन जायमाना सृष्टिर्मातृजातीया मन्यते। असावनु-लोमो न तथा धर्मविरुद्ध इति सत्यम्, किन्तु तदुत्पन्नसन्ततिर्जननीवर्ण-

तामधिगच्छतीति हेतोरयं गौणतामापन्नोऽवगन्तव्यः। यद्यप्ययं वर्णाश्रम-श्रृङ्खलाया विघातको नास्त्यतो न पापजनकः, नापि रजोवीर्याऽसमानतया वर्णाश्रमाघाती, तथापि मातुः पितुश्च रजोवीर्यसमानताऽसद्भावात् तज्जः सर्गो मातृजातिमापद्यते। विलोमजः सर्गः पापजनकत्वाद् वर्ज्य एव ॥ ५४ ॥

इदानीं वर्णाश्रमश्रृङ्खलाया द्वितीयः सिद्धान्तो वर्ण्यते—

**कुलोच्छेदी स्वगोत्रायाः ॥ ५५ ॥**

स्वगोत्रायाः सर्गः कुलोच्छेदी कुलविनाशको भवतीत्यर्थः। यथा हि वर्णाश्रमश्रृङ्खलायाः सरक्षकोऽसवर्णविवाहाभावः प्राथम्येन सिद्धान्तितः, तथैव स्वगोत्रोविवाहोऽपि त्याज्य एवेति द्वितीयः सिद्धान्तो निर्दिष्टः। एकगोत्रद्वाहेन कुलनाश इति महर्षिसूत्रकारस्य द्वितीयो राद्धान्तः, यत्र मानवजातौ वंशे च स्वगोत्रविवाहप्रथा प्रचलिता दृश्यते; नैव सा जातिर्वंशो वा चिरजीवितामापद्यते। एकगोत्रपरिणयेन कुलमशुद्धं सन्नश्यति, शुद्धकुलनाशेन जातिरप्यशुद्धा सती विनाशमुपगच्छति, लौकिकोऽपोतिहासोऽस्य साक्षी विद्यते यद् यत्र मनुष्यजातौ वर्णाश्रमश्रृङ्खलाभावः, न सा जातिः संसारेऽत्र चिरजीविनी परिलक्ष्यते। जगत्यत्र सख्यातीता मानव्यो जातयः करालकालगले निविशमाना नामशेषतामवापुः। केवलं वर्णाश्रमधर्मावलम्बिनी आर्यजातिरेवानादिकालत इदानी यावदपि जीवति। अग्रेऽनन्तकालं यावज्जीविष्यति च। सगोत्राया रजसा मिश्रं वीर्यं दौर्बल्यहेतुतां भजते। एतादृशं वीर्यं स्वीयं मौलिकत्वं विजहाति। कारणादतः स्मृतिशास्त्रे स्वगोत्रागमनं मातृगमनतुल्यमाम्नातम् ॥५५॥

अपरमप्यभिधत्ते—

**पितृकोपकरश्च ॥ ५६ ॥**

स्वगोत्रोद्वाहः केवल कुलनाशक एव नास्ति, प्रत्युत पितृकोपहेतुश्चापि। सृष्टिरक्षाकार्याधिकारवताम् अर्य्यमाग्निष्वात्तादिनित्यपितृ-

गणानां प्रकोपोऽपि स्वगोत्रपाणिग्रहणेन समुत्पद्यते। देवश्रेणीविशेषा नित्यपितृगणा आधिभौतिकस्य जगतो नियुक्ताः सन्ति संरक्षणे। स्थूलशरीरस्य निर्माणं संरक्षणं च तदीयं प्रधानं कार्यम्। एतदीय संविधानानां स्वाधीननियमा विद्यन्ते। सगोत्रोद्वाहतस्तेषु बाधकत्वात् तत्कोपः सुतरां सम्भवः॥ ५६॥

## शक्तिक्षयो वयोऽधिकायाः॥ ५७॥

वयोधिकया कन्यया सह परिणयनेन शक्तिक्षयो जायते। अतः शास्त्रेषु तादृशपरिणयो निषिद्धः। पुरुषो वीर्यरूपो नारी भूमिरूपेतिपूर्वमेवोक्तम्। यथा कीटादिसम्पर्कतो हि क्षेत्रवपनयोग्यबीजशक्तिनाशस्तथैव वयोधिकया सार्द्धं विवाहेन पुरुषशक्तिक्षयोऽनिवार्य एव। सर्गोत्पादकबीजेषु तिस्रोऽधिभूताधिदैवाध्यात्मशक्तयस्तिष्ठन्ति। एतच्छक्तित्रयविनाशः सहसैव न प्रतीयते; किन्तु त्रिकालदर्शिमहर्षिसिद्धान्तानुसारेण तिसृष्वपि शक्तिषु यथासमयं देशकालपात्रादिकमनुसृत्य न्यूनताऽवश्यम्भाविनी। यत्र कुले तादृशः विवाहः सम्पद्यते, तत्र व्यक्तौ च यथादेशकालपात्रं शरीरसम्पत्तिः संकल्पस्यात्मनश्च बलं क्रमशो ह्रासत्वमुपयाति। अत एवायुर्विदो मन्यन्ते—

ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते॥
जातो वा न चिरं जीवेत् जीवेद्वा दुर्बलेन्द्रियः।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेदिति॥ ५७॥

अन्यदप्युच्यते—

## त्रिविधशुद्धिहन्ता रजस्वलायाः॥ ५८॥

रजस्वलयोद्वाहेन त्रिविधानामपि शुद्धीनां हानिर्न निवारयितुं शक्या। रजोदर्शनेन कन्यावस्थायाः विनाशो नारीषु गर्भाधानयोग्यावस्थाऽऽविर्भवति। प्राकृतिकोऽयं स्वभावो यत् युवकः स्त्रियं युवती च पुरुषं काम-

येते। इदमपि स्वभावसिद्धं यत् ऋतुकाले नारीषु बलीयसी जायते पुरुष-समागमसमोहा। पशुपक्षिष्वप्येष नियमो निभाल्यते। सुतरां रजोदर्शनेन प्रादुर्भूतेनैव कन्यात्वविनाशतः स्त्री युवतीभावमासादयति। तदानीं संयमशीलाया अपि तस्याः शरीरे मनसि बुद्धौ च कियानपि परिणामोऽवश्यमेव सम्भवः। स चाल्पीयानेव कथं न सम्भवेत्, किन्तु सुनिश्चितो नूनमवधेयः। कारणेनैतेन तदानीं त्रिविधशुद्धिहानिर्यथा-सम्भवमनुमेयैव। क्षेत्रे त्रिविधशुद्धिहानौ सत्यां सृष्टौ तत्प्रभावः सुनिश्चित एवावगन्तव्यः॥ ५८॥

अन्यदपि—

प्रातिभाव्यात् सुरक्षादेशः॥ ५९॥

प्रातिभाव्यादुत्तरदायित्वाद्धेतोर्नारीणां सर्वत्रैव सुरक्षादेशः संरक्षणाज्ञा निभाल्यते। सृष्टिक्रियासु नारीजातौ सर्वाधिक्यं प्रातिभाव्यमतः कारणादेव सर्वतो देशकालपात्रेभ्यस्तत्संरक्षणं समधिक-प्रयोजनीयतामावहति। वर्णाश्रमधर्मं रजोवीर्यशुद्धिरक्षा केवलं नारीजातिः निबिभर्ति। त्रयाणामाश्रमाणामाश्रयो गृहस्थाश्रम एव। अतो गृहस्थाश्रमः सर्वतः श्रेष्ठो गीयते। तस्य चैकमात्राश्रयभूता नारीजातिरेव सिद्धा, एवं हि साक्षाद्रूपेण प्रवृत्तिधर्मस्य परोक्षरूपतो निवृत्तिधर्मस्य चाश्रय-स्वरूपा नारी विद्यते। अन्यच्चाभ्युदयमन्तरेण निःश्रेयससिद्धिरसम्भवा, नारीजातिसाहाय्यमन्तरा चाभ्युदयमार्गस्य सारल्यं नितरामसम्भावि। अत एतत्स्वीकर्त्तव्यमेव यत् सृष्टिसामञ्जस्यस्य धर्मार्थकाममोक्षाणा च चारितार्थ्ये स्त्रीजातेः प्रातिभाव्यं सर्वतोऽधिकम्। अतो वर्णाश्रमशृङ्खलायां सर्वत्रैव देशकालपात्रादौ नारीजातिसंरक्षणमादिष्टम्। स्मृतिशास्त्रे यथा—

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥ ५९॥

इदानीं शृङ्खलान्तरं निर्दिशति—

**आर्यपिण्डविशेषत्वं तद्वत् ॥ ६० ॥**

तद्वदेवार्यपिण्डविशेषताऽपि बोध्या। वर्णाश्रमशृंखलया सह नारीजातिसम्बन्धीयविज्ञानस्य दिग्दर्शनं कारयता सूत्रकारेण समाचक्ष्यते यत् वर्णाश्रमशृङ्खलायां नारीजातिप्राधान्यमिव आर्यपिण्डमात्रवैशिट्यमप्यवधेयम्। यद्यपि आर्यपिण्डोऽनार्यपिण्डश्चेति द्वावपि मानवपिण्डान्तर्गतावेव स्तः, परन्तु सृष्टेरादिकालत एवार्यपिण्डवत्या वर्णाश्रमधर्मविलम्बिन्या मनुष्यजातेः शारीरिकं वैशिष्ट्य सुप्रसिद्धम्। सभ्यतायाः, सामाजिकव्यवस्थायाः, आचारविचारयोः धर्मज्ञानस्य, आध्यात्मिकलक्ष्यस्य, जीवनशक्तेश्च पर्यालोचनयाऽऽर्यपिण्डविशेषता स्वीकर्त्तव्यैव सर्वैरिति॥ ६०॥

तदीयं विज्ञानमभिधीयते—

**आदितः सुसंस्कृतत्वात् ॥ ६१ ॥**

सृष्टेरारम्भकालादेव वैदिकसंस्कारैः सुसंस्कृतत्वात् सर्गसम्बन्धे आर्यपिण्डविशेषता सर्वसम्मता। ते च संस्कारा वर्णाश्रमशृङ्खलासदाचारमूलका एव ॥ ६१ ॥

शृङ्खलान्तरं निर्दिश्यते—

**तस्मात् सुसंस्कारकेन्द्रम् ॥ ६२ ॥**

तस्मात्कारणादार्यपिण्डः सुसंस्काराणां केन्द्रभूतः विद्यते। सुसंस्कृतत्वात् आर्यपिण्डः पूर्णावयवो निश्चीयते। पूर्णावयवत्वाच्चासावभ्युदयनिःश्रेयससंस्काराणां पूर्णरूपेण ग्रहणकेन्द्रतामापद्यते। अन्तःकरणमेव जीवस्य प्रधानं यन्त्रम्। पूर्णावयवतो जीवस्य प्रधानयन्त्रमपि पूर्णावयवं सिध्यति। तदीयान्तःकरणस्य मनोबुद्धिचित्ताहङ्काराश्चत्वारो विभागा अपि पूर्णावयवतामापद्यन्ते। चतुर्णामपि पूर्णावयवत्वे सम्पद्यमाने आर्यपिण्डीयसुसंस्कारग्राहके चित्ते पूर्णतामापन्नेऽभ्युदयनिःश्रेयससम्बन्धिसंस्कारग्रहण-

शक्तिः स्वतः समुत्पद्यते । सर्गादौ पूर्णावयवमानवाः समाविर्भवन्ति । अतो भगवतो ब्रह्मणः प्रथमा सृष्टिः परमहंसानां जायते । तदनन्तरं सृष्टिप्रवाहस्य सुसंस्कृतत्वहेतवे वर्णाश्रमशृङ्खला निबध्यते । ततः कालादेव संस्कारराशिरार्यपिण्डेऽङ्कितो रजोवीर्यद्वारा क्रमानुगत आकृष्टो बोभूयते । सर्वमेतत् संस्कारपादे सुस्पष्टितमेव ॥ ६२ ॥

अन्यच्चाभिधत्ते—

## त्रिविधाऽऽकाशसम्बन्धश्च ॥ ६३ ॥

त्रिविधैराकाशैस्तस्य सम्बन्धो विद्यते । पिण्डस्य ब्रह्माण्डस्य, अनन्तकोटिब्रह्माण्डानां चाधारभूतः आकाशश्चित्ताकाशश्चिदाकाशो महाकाशश्चेति संज्ञां भजते । जीवो यदा पञ्चकोषपरिपूर्णतया पूर्णावयवः सम्पद्यते, तदाऽसौ सुसंस्कारग्रहणपूर्णाधिकारी भवन् स्वत एव त्रिविधाऽऽकाशसम्बन्धयुक्तो जायते । अस्मादेव कारणाद् योगयुक्तमन्तःकरणं व्यापकतामादधाति, पिण्डान्तरस्य लोकान्तरस्य च संवादमवैति । योगिराजस्य तु कथैव का, समाहितान्तःकरणसाहाय्येन श्राद्धक्रियया लोकान्तरप्रस्थितस्यापि जीवस्य तृप्तिर्जायते, उपासकश्चोपासनालोके स्वेष्टदेवेन सह सम्बन्धस्थापनं कर्तुमर्हति । योगयुक्ता ज्योतिःशास्त्रवेत्तारोऽनेकेषां राशिनक्षत्रादिकानामाविष्कारं कृतवन्तो दृश्यन्ते । आयुर्वेदज्ञा महर्षयश्चापि विविधविचित्रवस्तुसमूहशक्तीनां परिज्ञानमन्वतिष्ठन्, इत्यादि सर्वं त्रिविधाकाशसम्बन्धस्थापनस्य साधारणमुदाहरणमवधेयम् ॥ ६३ ॥

अन्यदपि—

## शुद्धाशुद्धस्पर्शास्पर्शाधिकारि ॥ ६४ ॥

मानवपिण्डं शुद्धाशुद्धयोः स्पर्शास्पर्शयोश्चाधिकारि जायते । इदानीं महर्षिः सूत्रकारो मानवस्य पूर्णावयवतामधिगतस्य विशेषाधिकाराधिगमस्योदाहरणं ददाति । तथाहि-पञ्चकोषपरिपूर्णतया पूर्णावयवत्वमधिगतं मनुष्यपिण्डं पञ्चकोषीयैर्भिन्नै र्भिन्नैरधिकारैः सार्धं शुद्धाशुद्ध-स्पर्शास्पर्श-

शुभाशुभप्राप्त्यधिकृतिं लभते। एषु पञ्चसु कोषेषु शुद्धाशुद्धस्पर्शास्पर्शादीनां सदसत्परिणामाः प्रादुर्भवन्ति। दर्शनशास्त्रेऽन्नमय-प्राणमय-मनोमयविज्ञान-मयानन्दमयकोषाणामसत्परिणामा मल-विकार-विक्षेपावरणास्मितानाम-धेयैरभिधीयन्ते। जीवे पूर्णतायां सम्पद्यमानायां पञ्चसु कोषेषु सन्नसन् वा परिणामो नूनमाविर्भवति। शुद्धयाऽशुद्धया च सन्नसन् वा परिणामोऽनुभूयते। जीवे पूर्णावयवत्वदशायां स्वभावत एव जाड्यह्रासचैतन्यपरिबृंहणतः पञ्चापि कोषा विशेषशक्तिसम्पन्ना जायन्ते। तदानीं मानवो विविध-दोषगुणशुद्ध्यशुद्ध्यादीनां पञ्चकोषैः पृथक्पृथक् संग्रहे सामर्थ्यमधिगच्छति। अत एव पूर्णज्ञानमया वेदास्तत्सम्मतशास्त्राणि च शुद्धाशुद्धस्पर्शास्पर्श-विवेकं सविशेषमाज्ञापयन्ति ॥ ६४ ॥

तत्र प्रथमं प्रमाणं यथा—

**विष्ठादिभिः प्रथमः ॥ ६५ ॥**

प्रथमोऽन्नमयः कोषो विष्ठादिनाऽशुद्धो जलादिना च शुद्धो भवतीत्यर्थः। अन्नमयकोषप्राधान्येन शुद्धाशुद्धस्पर्शास्पर्शविवेकरहस्यमुदाहृत्या बोध्यते। तथा हि विष्ठामूत्रादिसम्बन्धेन शरीरेऽशुद्धतायाः स्पर्शदोष-दुष्टताया यथा सम्भावना, तथैव जलमृत्तिकादिना तत्तद्दोषनाशोऽपि स्वतः सिध्यति। एवं प्रकारेणान्नमयकोषस्य शुद्धाशुद्धस्पर्शास्पर्शरहस्य-मवधेयम्। वेदशास्त्रेषु शुद्धाशुद्धस्पर्शास्पर्शसम्बन्धिनो विवेकाः केवलं स्थूल-शरीरापरनामकेनान्नमयेन कोषेणैव न सम्बध्नन्ति। येषां येषां शुद्ध-पदार्थानां स्थूलशरीरेणैतादृशः सम्बन्धस्तदीयविज्ञानस्यैव दिग्दर्शन-मुदाहरणेनैतेन कारितमास्ते। अन्नमयकोषस्य दुष्टः परिणामो मल इत्युच्यते। दार्शनिक शब्दसमाम्नातेन मलेन सा दुष्टा शक्तिरभिधीयते; यया जड़ता तमोगुणो वा वर्धते। अशुद्धपदार्थस्पर्शसंसर्गतः शरीरे मल-शक्तेर्वृद्धिर्जायते, शुद्धया च ह्रासः। प्रासङ्गिकमिदमभिधीयते यत् शुद्धाशुद्धस्पर्शास्पर्शविषये शास्त्रेषु समुपदिष्टविचारमूले त्रिगुणस्याधि-दैवस्यापि च संबन्धः संस्थापितो विद्यते, गङ्गाजलादीन्यधिदेवोदाहर-

णानि वेदितव्यानि। गुणविचारोदाहृतयो मधुपलाण्डुगोमूत्रगोमयादिभिर्ज्ञातव्याः। हिंसाप्राप्तमपि माक्षिकं, गोमूत्रं गोमयं च गवां मूत्रं पुरीषं सत्त्वगुणवर्धकत्वात्पूतमाम्नातम्, एवं हि कन्दमूलभूतमपि पलाण्डु तमोगुणवर्द्धकत्वादपवित्रमुक्तम्। एवं प्रकारेण पूज्यचरणैस्त्रिकालदर्शिमहर्षिभिर्दैवराज्य सम्बन्धमवलोक्य सत्त्वरजस्तमोरूपं गुणत्रयसम्बन्धं सुविचार्य दार्शनिकदृष्टया शुद्धाशुद्धस्पर्शास्पर्शमौलिकसिद्धान्तो निर्णीतः। स च सिद्धान्तो नास्ति कपोलकल्पितः किन्तु दार्शनिकाधारप्रतिष्ठितो वेद्यः॥ ६५॥

द्वितीयं प्रमाणं दीयते—

**शवादिभिर्द्वितीयः॥ ६६॥**

शवादिभिर्मृतकशरीरस्पर्शादिभिर्द्वितीयः प्राणमयः कोषोऽपवित्रतां प्राप्नोति। शवादिस्पर्शद्वारा स्पर्शदोषा अशुद्धतादयो दोषाश्च शास्त्रनिर्दिष्टा साक्षात् प्राणमयकोषसम्बन्धनिबन्धनाः। शवादिस्पर्शानन्तरं धात्वग्निस्पर्शतो दोषहानिः प्राणमयकोषसम्बधेनैव निर्णीतः। लोकान्तरं प्रतिष्ठमाने जीवे कोषानन्यानादाय प्राणमय एव कोषः शरीरान्निःसरति। अवस्थायामेतस्यां प्राणविरहितः शवोऽन्यदीयप्राणमयकोषशक्तिविशेषमाक्रष्टुं देशकालपात्रसामर्थ्यमधिगच्छति, तेन च शवस्पर्शकारिणो व्यक्तिविशेषस्य प्राणशक्तिहानिसम्भावना सम्भवति। तत्परिहारार्थमेव शवस्पर्शे दोषस्याशुद्धतायाश्च समुल्लेखः शास्त्रेषु निभाल्यते। अत एव हेतोः स्वजातिद्वारा शववहनविधिस्तदन्तरं च नानाप्रकारतः पवित्रतासम्पादननियमश्च निर्दिष्टः, प्राणमयकोषसम्बन्धकारणादेव राजरोगयुक्तं शवं प्रायश्चित्तादिना संस्कृत्य तद्वहनविधिः प्राप्यते। पुराणेषु समुदाहृतमिदं यत् महाशक्तिशालिनः पूर्णवतारस्य भगवतः श्रीकृष्णचन्द्रस्य प्राणहीनविग्रहस्पर्शत एव भक्तस्य महापराक्रमशालिनोऽप्यर्जुनस्य सर्वा शक्तयः शवे समाकृष्टाः। अतः स्पर्शास्पर्शशुद्धाशुद्धविवेकः प्राधान्येन प्राणमयकोषसम्बन्धेनैव सुनिश्चितः। अन्यच्च स्पर्शास्पर्शशुद्धाशुद्ध-

विवेकोऽवस्थान्तरेण बहुभिः कोषैरपि साक्षात्सम्बन्धयुक्तो दृश्यते। विज्ञानमिदं सुस्पष्टयितुमुदाहरणं दीयते, तदित्थम्—प्राणमयकोषसम्बद्धा अपि अन्नादिखाद्यपदार्थशुद्धाशुद्धस्पर्शास्पर्शगुणदोषा, अवस्थान्तरेण मनोमयाद्विज्ञानमयाच्च कोषात् सम्बन्धसंयुक्ताः सम्मन्यन्ते। सुवर्णरौप्यकांस्यमृत्तिकादि शुद्धाशुद्धविवेकः प्राणमयकोषत एव सम्बद्धो ज्ञायते। म्लेच्छान्त्यजादि दूषितमन्नजलं स्वकीयं फलं प्रथमं प्राणमये कोषे जनयति स्पर्शकारिणः प्राणानामाकर्षणविकर्षणशक्तिदूषितमन्नं ग्रहीतुः प्राणशक्तिं दूषयति। मनःप्राणवीर्याणां परस्परं घनिष्ठसम्बन्धत्वात् पापीयसश्च तदेतदन्नं मनोमयकोषं दूषयद् वीर्यमुपढौकितं शुद्धसृष्टिबाधकं बोभूयते। अन्नदोषविषयेऽत्र भीष्मपितामहेन प्रमाणितं यदासुरसम्पत्तिसमुद्भूतव्यक्तिविशेषान्नग्रहणेन विज्ञानमयकोषोऽपि मलिनायते। कारणेनैतेनैव पौत्रवधूं द्रौपदीं घृणितरूपेण लज्जितां विलोक्यापि पितामहेन मौनमाश्रितम्। अनेनैतत्सिध्यति यदन्नदोषेण विज्ञानमयकोषं मलिनीकुर्वता बुद्धावपि विकारः समुत्पाद्यते। प्राणमयकोषसम्बन्धेन शुद्धाशुद्धस्पर्शास्पर्शव्यवस्था समधिकव्यापिका निभाल्यते। उपासनापीठेषु वर्णाश्रमशृङ्खलाजनित-स्पर्शास्पर्शशुद्धाशुद्धविमर्शः प्राणमयकोषसम्बन्धसंयुक्त एव वेदितव्यः। देवमन्दिरेषु आर्यानार्योन्नतावनतमानवादिसमानरूपप्रवेशोऽपि प्राणमयकोषसम्बद्धसिद्धान्तं निर्बिभर्त्ति। शूद्रप्रतिष्ठितदिव्यदिव्यदेवमूर्त्तीनां ब्राह्मणकृतस्य प्रणामस्य निषेधे, सन्यासिना कृते च केवलं देवपीठस्पर्शविधाने विज्ञानमेतदेव कारणभूतमवगन्तव्यम्। प्रत्येकदेवालये प्रस्तरादिनिर्मितप्रतिमायाः पूजनं न क्रियते, प्रत्युत तत्र प्राणमयकोषद्वारा संस्थापितदैवपीठस्य समर्चनं विधीयते। शूद्रद्वारा प्रतिष्ठितदेवविग्रहपीठेषु शूद्रसंस्कारशक्तिरवश्यं सन्निहिता तिष्ठति। शूद्रान्तःकरणसंस्कारसंस्कृतदेवपीठस्य ब्राह्मणकृतेन प्रणामेन नास्ति ब्राह्मणस्य क्षतिः, किन्तु देवपीठप्राणशक्तिक्षयो जायते। एतदाद्युदाहरणेनान्येऽप्यौदाहरणसमूहाःपरि ज्ञेयाः। भगवत्प्रतिमादर्शने विश्वेषामधिकारसाम्येऽपि

देवमन्दिरप्रवेशे ब्राह्मणादिजातिभेदः, उपासनासम्प्रदायभेदः, स्वर्शास्पर्शविचारविभेदोऽपि विज्ञानसम्मतो निर्णीतः। देवविग्रहे प्राणप्रतिष्ठायां क्रियमाणायां पूर्वमुपासकः प्रतिष्ठापको निजशरीरे समावाहितं देवं पीठे स्थापयति, कारणेनैतेन पीठे स्थापनकर्तुः पुरुषस्य संस्कारादयो विद्यमाना भवन्ति। अतो यत्र पीठे यादृशो स्पर्शास्पर्शमर्यादा परम्परातः समागच्छति, तत्र हानौ सत्यां तद्देवपीठशक्तिह्रासो जायते। एतस्मात् कारणात् देवमन्दिरेषु स्पर्शास्पर्शविवेकमहत्त्वं समधिकं निर्णीतम्। अतो वर्णाश्रमश्रृङ्खलायां शुद्धाशुद्धस्पर्शास्पर्शविवेकाधिकारविज्ञानमतिगम्भीररहस्यपरिपूर्णं विद्यते ॥ ६६॥

तृतीयं प्रमाणमुपन्यस्यते—

## अशौचादिभिस्तृतीयः ॥ ६७ ॥

अशौचादिभिस्तृतीयो मनोमयः कोषो दुष्यतीत्यर्थः। ग्रहणजननमरणानामशौचानि तदीयशुद्धिप्रकाराश्च मनोमयकोषः साक्षात्सम्बन्धवन्तो विज्ञातव्याः। एतद्विज्ञानस्य सुविचारपूर्वकमननेन मनोमयकोषसम्बद्धशुद्धाशुद्धविज्ञानं सारल्यमापद्यते। सूर्यचन्द्राभ्यां पृथिव्याः आकर्षणविकर्षणशक्तिसम्बन्धं, तेन च ज्यौतिषस्य प्राणशक्तेश्च सम्बन्ध जडपदार्थवादिनोऽपि मन्यन्ते। देवशक्तेरभिमन्तार आस्तिकजनास्तु अविशेषं तत्सम्बन्धं स्वीकुर्वते। सूर्यग्रहणकाले सूर्यपृथिव्योरन्तराले चन्द्रमसः समागत्या, चन्द्रापरागसमये सूर्याचन्द्रमसोर्मध्येभूमेः समागमेन स्वाभाविकशक्तीनां गमागमे तदानीं पूर्णबाधा समुत्पद्यते। एतस्मिन् दैवदुर्विपाककाले ऐहलौकिकमानवान्तःकरणेषु सुमहत्परिणामसम्भावना स्वभावसिद्धा तेन परिणामेन स्पर्शास्पर्शशुद्धाशुद्धविवेकस्य शास्त्रानुसारविचारोऽपि विज्ञानानुमोदित एव। एवं किल जननमरणाशौचविज्ञानमप्यतिरहस्यपरिपूर्णमास्ते। वर्णाश्रमश्रृङ्खलामनुसृत्य यत्र कुले रजोवीर्य्यशुद्धिस्तस्य तु कथैव का, यतस्तेन कुलेन साकं नित्यपितॄणां प्रातिभाव्यसम्बन्धः

स्थापितस्तिष्ठति। साधारणकुलेष्वपि तत्कुलसम्बन्धवन्तः परलोकगामिन आत्मानोऽत्र लोके समागन्तारश्चात्मानो वासनाजालैस्तत्तत्कुलैः सह विजड़ितास्तिष्ठन्ति। तत्तद्वासनाजनितमोहसम्बन्धादाकर्षणविकर्षणाभ्यां नित्यपितृप्रेरणया, तत्कुलप्रसूतव्यक्तीनां चेतस्सु संयोगवियोगप्रभावोऽधिदैवकारणतोऽलक्षितरूपेण निपतत्येव। एतत्प्रभावविचारेण जननमरणाशौचशुद्धाशुद्धविवेको निर्णीतः। एतेन शुद्धाशुद्धस्पर्शास्पर्शविवेकेन सह जपदानादिविधीनां ब्रह्मचर्यादिव्रतानां च सम्बन्धकारणमेतदेवेति॥ ६७॥

चतुर्थं प्रमाणं निर्दिशति—

**संसर्गादिभिश्चतुर्थः॥ ६८॥**

संसर्गादिभिश्चतुर्थो विज्ञानमयः कोषः प्रभावितो भवति। संसर्गजनितसदसत्परिणामः साक्षाद्रूपेण विज्ञानमयं कोषं स्पृशतीत्यर्थः। वेदे तत्सम्मतेषु शास्त्रेषु च संसर्गसम्बन्धीयः स्पर्शास्पर्श-शुद्धाशुद्धविवेको विज्ञानमेतन्निर्विशति। अनीश्वरवादनिरतनास्तिकगृहगमनतत्संसर्गनिषेधः; आचारहीनानार्यमानवानाम् इन्द्रियसेवापरायणम्लेच्छादिदुराचारिणाम्, वेश्याप्रभृतीनां संसर्गनिरोधः, कृते तत्संसर्गे शास्त्रीयप्रायश्चित्तविधानम्, तथैव तीर्थदेवता-साधुदर्शनं, पुण्यात्मसंसर्गश्चेत्यादि शास्त्रनिर्दिष्टं कर्मतद्विज्ञानानुमोदितमेवाभ्युपगन्तव्यम्। एवं किल शुभाशुभसंसर्गतश्चैकाधारे मनोमयप्राणमयविज्ञानमयाः कोषाः प्रभावान्विता जायन्ते। तन्निकटस्थवातावरणेन तदाकर्षणविकर्षणशक्त्या च प्राणमये कोषे प्रभावोत्पत्तिर्निभाल्यते। तदीयहावभावाचारविचारादिना मनोमयकोषः, तदीयकथनोपकथनप्रभृतिभिर्विज्ञानमयः कोषश्च प्रभावितो भवति। कारणादस्मादेव संसर्गजनितशुद्धाशुद्धस्पर्शास्पर्शविवेकविधानम्, दुराचारिसंसर्गदोषनिवारकप्रायश्चित्तं च शास्त्रेषु निर्दिष्टम्। इमामेव गम्भीरदार्शनिकयुक्तिमाश्रित्य परमेश्वरनिन्दकेन्द्रियपरायणम्लेच्छादिनिवासभूमिगमनं शास्त्रेषु निषिद्धम्। वर्णाश्रमश्रृङ्खलानुसारमनेके शुद्धा-

शुद्धस्पर्शास्पर्शविवेका विज्ञानमयकोषे कार्यकारिणः सम्मताः। आर्यजातेरभ्युदयनिःश्रेयसलक्ष्यसिद्धये समाम्नाता वेदशास्त्रसम्मतशुद्धाशुद्धस्पर्शास्पर्श-निर्णीतविवेकसिद्धान्ताः, पञ्चकोषप्रपन्नसूक्ष्मशक्तयश्च योगदृष्ट्याऽलौकिकप्रत्यक्षद्वारा पूज्यचरणत्रिकालदर्शिमहर्षिभिः सम्यग् विवेचिताः सन्ति। ते च सिद्धान्ता गम्भीरविज्ञानानुमोदितत्वाल्लौकिकबुद्धिभिरवधारयितुमशक्या अपि नोपेक्षणीया विद्यन्ते ॥ ६८॥

पञ्चमं प्रमाणं निर्दिश्यते—

## सदसद्भिः पञ्चमः ॥ ६९ ॥

सदसद्भिः पञ्चमः कोष आनन्दमयाख्यः प्रभावान्वितो जायते। शुद्धाशुद्धस्पर्शास्पर्शविवेको वर्णाश्रमशृङ्खलाया मौलिकः सिद्धान्तः। जीवस्याभ्युदयनिःश्रेयससिद्धेरस्वाभाविकसंस्कारनिवृत्तिपुरस्सरस्वाभाविकसंस्काराभिवद्र्धनं तदीयं रहस्यमवगन्तव्यम्। प्रथमे पादे सिद्धान्तितमिदं यज्जीवो धर्मसाधनेन पूर्वावस्थायामभ्युदयमन्तिमावस्थायां च निःश्रेयसमधिगत्य कृतकृत्यतामाप्नोति। इदमपि निर्णीतं यत् वर्णाश्रमधर्माचारपरिपालनेनार्यजातौ स्वत एव प्रवृत्तिनिरोधो निवृत्तिपरिपोषणं च जायते। जीवबन्धनकारिणोऽस्वाभाविकस्य संस्कारस्य ह्रानिः स्वाभाविकस्याद्वितीयस्याभिवृद्धिर्यावती तत्र सम्पद्यते तावदेवासौ जीवो मुक्तिपथाभिमुखमग्रेसरति। जीवस्याभ्युदयनिःश्रेयसयोः पन्थानं सरलीकर्त्तुं शुद्धाशुद्धस्पर्शास्पर्शविवेक एकात्युत्तमा शृङ्खला। पञ्चकोषशुद्धिसंरक्षणेन यथाक्रमं मलविकारविक्षेपावरणास्मिता न वृद्धिमाप्नुवन्तीत्यपि पूर्वं सुनिर्णीतम्। यैः किल क्रियाकलापैरशुद्धता विवर्धते, यदीयस्पर्शतश्चावरणं घनत्वमापद्यते, ते सर्वेऽपि क्रियाकलापा विचारपूर्वकमभ्युदयनिःश्रेयसप्रार्थिभिः सर्वथैव हेयाः सन्ति। क्रियकलापाः आस्थूलशरीरात् सूक्ष्मकारणशरीरपर्यन्तं नैजं प्रभावमुत्पादयन्ति। अतः शुद्धाशुद्धस्पर्शास्पर्श-विवेकरहस्यमिदमेव यत् पूर्वोदिता मलविकारविक्षेपावरणास्मिता नाभिवृद्धिं गच्छेयुः। शुद्धाशुद्धस्पर्शास्पर्शविवेकस्य शुद्धाशुद्धाः क्रियाः

पूर्णावयवजीवस्वरूपमानवस्यान्नमयमनोमयविज्ञानमयकोषेषु कथमिव प्रभावमुत्पादयन्ति तत्सामान्यरूपदिग्दर्शनं पूर्वसूत्रेषु निर्दिष्टमेव। प्रकृत सूत्रेऽत्र तत्तत्क्रियाकलापानां साक्षाद्रूपेणानन्दमयकोषे कीदृशः प्रभावः समुत्पद्यते, सोऽभिधीयते—

सद्ब्रह्म, असन्माया, सदात्मा, असदात्मा, सत् शरीरस्थं कूटस्थ-चैतन्यम् असदिन्द्रियाणि तद् विषयाश्च, सज्जगदम्बा जगदीश्वरौ असद्-दृष्टभोग्यपदार्थाः, सदुपास्येष्टदेवः असज्जगन्ति, आप्रत्याहारात्समाधि-पर्यन्तम् सत्साम्राज्यम् द्रष्टृदृश्यसम्बन्धनिबन्धनाः सर्वे त्रिपुटीविषया असतो राज्यमिति। अतो याभिः शारीरिकमानसिक-बौद्धिकक्रियाभिः पूर्वोक्तसत्स्वरूपस्य सङ्गो जायते, तेन निर्मलो भवत्यानन्दमयः कोषोऽस्मिता च न वर्धते। पूर्वनिर्दिष्टाऽसतः संगेन क्रमश आनन्दमयकोषो मलिनायते एतद्गहनविषयमवधारयितुं दार्शनिकं मतभेदं निराकर्तुं चेदमवधारणीयं यत् सञ्चकोषाः पवित्रतामुपगच्छन्ति, मुनिभिरेवं समुन्नतेन शुद्धाशुद्धस्पर्शास्पर्शविवेकेनानन्दमयः कोषः परिपूर्यते असतः संसर्गेणा-पवित्रतायामागतायां तैः सतः स्पर्शेन पवित्रता च सम्पाद्यते ॥ ६९ ॥

प्रसङ्गतः पारस्परिकसम्बन्धं निदर्शयति—

अन्योऽन्यसम्बद्धाश्च ॥ ७० ॥

सर्वे पञ्चकोषाः परस्परसम्बन्धयुक्ताश्च विद्यन्ते। जीवस्याभ्युदयनिः-श्रेयससम्प्राप्तिरेव वर्णाश्रमशृङ्खलासदाचारादीनां लक्ष्यमवगन्तव्यम्। नियमेन सत्त्वगुणवर्धनम् आत्मावरणकारिपञ्चकोषाणां क्रमशः शुद्ध्या आत्मज्ञानोदय एव तदुद्देशः। पञ्चकोषमलिनतावर्धनाभाव एव शुद्धाशुद्ध स्पर्शास्पर्शविवेकस्य मौलिकं रहस्यमवेतव्यम्। यद्यपि केचन शुद्धाशुद्ध-स्पर्शास्पर्शविवेकाः आनन्दमयकोषस्य, बहवो विज्ञानमयकोषस्य, अन्ये मनोमयकोषस्य, अपरे प्राणमयकोषस्य, केचिच्चान्नमयकोषस्य, विचारिता निर्णीताः सन्ति, परन्तु वेदशास्त्रेषु तदीयाः पृथक् पृथगाधिकारा न

निर्दिष्टाः, तत्प्रधानहेतुरयमेव यत् परस्परं गुम्फितत्वादेकस्या एव शुद्धेर-शुद्धेश्च प्रभावः पञ्चस्वपि कोषेष्वधिको वा न्यूनो वा निपतत्येव। एकं शरीरं प्राणं वा मलिनीकुर्वन्नशुद्धपदार्थोऽस्पृश्यविषयो वा तत्तकोषान् मलिनयन् न्यूनाधिक्यरूपेण पञ्चस्वपि कोषेषु नैजं प्रभावं पातयति। एककोषतः क्रियमाणा क्रिया न्यूनाधिक्यतः सर्वानपि कोषान् प्रभावयति। यतः सर्वेऽपि कोषा अन्योन्यसम्बन्धवन्तो वर्त्तन्त इति ॥ ७० ॥

अन्यदपि निर्दिशति—

## त्रिविधाश्च ॥ ७१ ॥

ते सत्त्वरजस्तमोभेदेन त्रिविधास्त्रिप्रकारा भवन्ति। शुद्धाशुद्ध स्पर्शास्पर्शविवेकविषये विचाराधिकारभेदौ प्राप्येते। द्वयोरनयोर्देशभेद-मनुसृत्य पार्थक्यं दृश्यते। वर्णाश्रमस्त्रीपुरुषबालवृद्धादिभेदतोऽस्पर्शा-स्पर्शविवेकव्यवस्था शास्त्रेषु परिदृश्यते। आचार्यमते सम्प्रदायादावप्य-नेके भेदाः प्रतीयन्ते। अतो जिज्ञासुशङ्कासमाहितये प्रतिपाद्यते यत् त्रिगुणभेदानुसारमधिकारभेदकारणात् शुद्धाशुद्धस्पर्शास्पर्शविवेके प्राय-श्चित्तादावपिमतभेदादृष्टिगोचरतामायन्ति। परन्त्वयं निश्चितो राद्धान्तो यदशुद्धतास्पर्शदोषप्रभावो यत्र कोषे समुत्पद्यते, तत्कोष-शक्तिं लक्ष्यीकृत्य शुद्धिनिमित्तकप्रायश्चित्तविधानं सर्वथोपादेयमव-गम्यते। एतदप्यवगन्तव्यं यत् अधिदैवशक्तियुक्तगोदानगङ्गास्नाना-दिकं सर्ववादिसम्मतपुण्यजनकमतएवाभ्युपगम्यते यदधिदैवशक्तिप्रधान-तया त्रिगुणविभेदमनुसृत्य सर्वविधाधिकारिणां कृते समानरूपेण हिताधायकमभ्युपेयते। पञ्चकोषाधिकाराश्चैते परस्परगुम्फितत्वाद् वर्णाश्रमशृङ्खलायाः शुद्धाशुद्धस्पर्शविवेके बहुवैचित्र्यमादधते। कारणाद-स्मादेवान्नमयकोषप्रभावः प्राणमयं मनोमयं विज्ञानमयं कोषयावत् स्वप्रभावान्वितं विदधाति। एतद्विचारत एव प्रायश्चित्तनिर्णयो विधेयः। अत्र देशकालपात्रविचारोऽप्यवश्यमनुष्ठेयः। यथा हि परिमार्जि-तान्तःकरणेषु तत्प्रभावाधिक्यमभ्युपगन्तव्यम्। अन्यच्चात्मज्ञानिना

पुरुषेण प्रभावोऽसौ ज्ञानद्वारा भस्मसात्कर्त्तुं शक्यते। प्रायश्चित्तनिर्णये विज्ञातमिदमनुसरणीयं यत् येन कोषेण सह यस्य दोषस्य सम्बन्धप्राधान्यं वर्तते तमभिलक्ष्यैव प्रायश्चित्तव्यवस्थापनमुचितम्। एवं किल वर्णाश्रम-शृङ्खलासहायक-शुद्धाशुद्धस्पर्शास्पर्शविवेकव्यवस्था सुदृढदार्शनिकभित्ति-प्रतिष्ठितत्वात् परममङ्गलाधायिका विज्ञेया। तदनुसारमाचारपालनेन, विचारानुसारं प्रायश्चित्तव्यवस्थापनेन च आर्यजातेरार्यपिण्डस्य चाभ्यु-दयनिःश्रेयसयोः पन्था सरलायते ॥ ७१ ॥

तत्सम्बन्धेऽन्याऽऽवश्यकता प्रदर्श्यते—

## अधिकारभेदः ॥७२॥

यथा किल जैवकर्मणोऽधोगामिस्त्रोतोनिरोधाय वर्णाश्रमधर्म-स्यात्यन्तोपकारिता दर्शनशास्त्रस्यैतस्य पूर्वसूत्राणां विज्ञानेन सुसिद्धा, तथैव जैवकर्मणोऽधोगामिस्त्रोतसो जीव परिरक्ष्य तत्क्रमोन्नातमार्गं विनिश्चेतुमधिकारभेदस्यापि परमा प्रयोजनीयता। मानवः स्वपिण्डा-धीश्वरो भूत्वा निरङ्कुशतामापद्यमानः पूर्णावयवो भवन् इन्द्रियसम्बन्धताऽ-त्याचारपरायणः प्राकृतिकनियमतो विरुद्धाचरणनिरतो नैजं स्वभावमधो निपातयन् गमागमचक्रे वारं-वारं भ्राम्यति। तदानीमसौ ध्रुवफलोत्पादक-धर्माश्रयणं विना स्वकीयां क्रमोन्नतिं नैव सुरक्षितुं प्रभवति। अतः जीवस्याधिकारं निर्णीय तदनुसारमुपदिष्टं धर्मसाधनं तदुन्नतिकरं सम्भवति। अन्यथा तदीया नियमिता समुन्नतिर्निरुध्यते। अत्यन्तविषया-सक्तस्य कर्मसङ्गिनो मलग्रस्तस्य मानवस्य हितसाधनाय सकामकर्मकाण्डो-पदेशः साधीयान्। तेनैव च तदुन्नतिः सम्भवा, विषय-वैराग्यसम्पन्नस्य शास्त्रचर्चाभिरुचिशीलस्याप्यावरणदोषयुक्तव्यक्तिविशेषस्य कृते ज्ञान-काण्डोपदेशस्तदीयक्रमोन्नतिकारको भवितुमर्हति। तथैवान्यान्याप्युदा-हरणानि वेदितव्यानि, यन्नारीणां तपोमूलकः, पुरुषाणां च यज्ञमूलको धर्माचरणोपदेश उभयसमुन्नतिमार्गसरलतासम्पादकः स्यादन्यथा तत्तदुन्नतिमार्गो जटिलतामापद्येत। एतदुदाहरणतः सुस्पष्टमिदं सिध्यति

यद् विभिन्नप्रकाराधिकारवतां मानवानां कृते तदधिकारानुसारोपदेशं विना तत्क्रमोन्नतिमार्गो न सरलतामापद्यते। बुद्धिभेदेन तद्धानिरेव। यथा क्लिाज्ञानिनां राजयोगोपदेशः, साधनचतुष्टयरहितानां वेदान्तीयमनन-निदिध्यासनोपदेशः, तत्त्वज्ञानिनां शिष्याणां बाह्यपूजामन्त्रयोगसाधनेष्वेव विनिपात्य संरक्षणयत्नश्चोभयविधशिष्यनियमितक्रमोन्नतिबाधक एव न भवति, प्रत्युत तदवनतिकरोऽपि सम्भावनीयः। संसारेऽत्र प्रचलित-धर्ममार्गान्तरेष्वधिकारक्रमभेदाभावात् ते धर्ममार्गा असम्पूर्णा एव विज्ञायन्ते। अधिकारभेदशृङ्खलायाः परिपूर्णरूपेण विद्यमानत्वात् सनातनो नित्यसिद्धो वैदिक आर्यधर्मः सर्वाङ्गपूर्णः समाम्नातः। सुतरां सिद्ध-मेतद्यज्जैवे कर्मणि सुनिश्चितयाऽधिकारभेदव्यवस्थया साधकानां क्रमोन्नतिर्निश्चप्रचेति॥ ७२॥

प्रयोजनान्तरं निर्दिशति—

**शुद्धित्रैविध्यं च॥ ७३॥**

शुद्धेस्त्रैविध्यमप्यपेक्षितम्। अधोगामिस्त्रोतः सम्पन्नजैवकर्मणो निम्नगामिनीं गतिमवरुध्य तन्नियमितक्रमोन्नतिस्थायितासम्पादनार्थं वर्णाश्रमधर्मोऽधिकारभेदयोर्यथा प्रयोजनीयता तथैव त्रिविधशुद्धेरपीत्यर्थः। स्थूलसूक्ष्मकारणशरीरभेदेन बाधा अपि त्रिविधा भवन्ति। इमास्तिस्त्रो बाधा मनुष्याणां नियमितक्रमोन्नतौ बाधिका जायन्ते। एतत्त्रितय-सम्बन्धेन पवित्रताऽपि त्रिविधा ज्ञातव्या। शारीरिकी मानसिकी बौद्धिकी चेति, एतत्त्रितया आधिदैविकी, आध्यात्मिकी वा विज्ञातव्या। प्रथमया मलस्य, द्वितीयया विक्षेपस्य, तृतीयया आवरणस्य च नाशो विज्ञयः। एतस्यास्त्रिविधायाः शुद्धेरभावाज्जीवस्य स्थायिनी नियमिता क्रमोन्नति-र्भवितुं नार्हति। अत एव श्रुतिर्हि सहैव काण्डत्रयसाधनमुपादिशति। कर्मकाण्डीयैराधिभौतिकी, उपासनाकाण्डीयैराधिदैविकी, ज्ञानकाण्डीयैश्च साधनैराध्यात्मिकी शुद्धिः सम्पद्यते। सुतरां जैवकर्मणा समुन्नतिसम्पाद-नार्थं त्रिविधायाः शुद्धेरपि नितरां प्रयोजनीयताऽवगन्तव्या॥ ७३॥

इदानीं तृतीयस्य स्वाभाविकी गतिरुच्यते—

**ऐशमुभयवाहि ॥ ७४ ॥**

सहजजैवेशेषु ऐशकर्मणो गतिरुभयवाहिनी वेद्या। जीवस्य पतनकाले उत्पतनकाले वा ऐशकर्मणः साहाय्यमपेक्ष्यते। मानवयोनितो जीवस्यासद्भोगलब्धये प्रेतलोके, नरकलोके, एकजन्मकृते तिर्यग्योनौ वा प्रापणं दैवाधीनमेव विद्यते, तथैव मानवे निजसत्कर्मोपभोगाय पितृलोकं, देवलोकं वा प्रतिष्ठते तदानीमपि तेन दैवसाहाय्यनिबन्धनैशकर्मसाहाय्यमपेक्षितम्। विज्ञानमिदमन्ययाऽपि विधया बोध्यते। तथाहि—सहजं कर्म केवलमूर्द्ध्वगामि, जैवं तु केवलमधोगामि सिद्धम्। वर्णाश्रमधर्माधिकारभेदत्रिविधशुद्धिभिश्च जैवकर्मणो निम्नगामिनी गतिर्निरुध्यते। अतोद्वयमप्येतदेकदेशीयमवगन्तव्यम्। एकस्य गतिरूर्द्ध्वमपरस्य चाधः। परमैशकर्मणो गतिः उभयवाहिनो निभाल्यते। यतोह्यैशकर्मण उच्चैर्नीचैर्वा गमनसमये साहाय्यमपेक्ष्यते। अत एतत् स्वीकर्त्तव्यमेव यदैशकर्मव्यापकता सर्वाधिका सर्वोन्मुखिनी चेति ॥७४॥

प्रसङ्गादैशकर्ममहत्त्वं प्रतिपाद्यते—

**अतो विचित्रमलौकिकञ्च ॥ ७५ ॥**

अतः कारणात्तदैशं कर्म विचित्रमलौकिकं च विज्ञातव्यम्। सहज जैवं कर्म स्वाधिकारदृष्ट्या विस्तृतं शक्तिशालि भवदपि द्वयमप्येतदेकदेशीयं प्रत्यक्षतोऽवगन्तुमपि शक्यते, परमैशं कर्म पूर्वोक्तविज्ञानानुसारेण सर्वोन्मुखीनशक्तिसम्पन्नत्वात् सर्वसहायकत्वाच्च विचित्रमलौकिक च स्वीक्रियते। सर्वोन्मुखीनशक्तिमत्वाद्विचित्रं रहस्यपूर्णगुप्तशक्तिमत्वाच्चालौकिकमिति ॥ ७५ ॥

प्रसङ्गतः कर्मबीजसंग्रहस्थानं निर्णीयते—

**संस्कारस्थानं त्रिविधं चित्ताकाशं चिदाकाशं महाकाशं च ॥७६॥**

चित्ताकाशचिदाकाशमहाकाशभेदेन संस्कारस्थानं त्रिविधं भवतीत्यर्थः। कर्मणः श्रेणिविभागं स्वरूपवर्णनं च विधाय पूज्यपादमहर्षिः

सूत्रकारः कर्मसंग्रहो बीजरूपेण कुत्र तिष्ठतीत्यभिधत्ते। कर्मस्वरूपवृक्षो यदा संस्काररूपवटबीजस्वरूपेण परिणमते, तद्वावस्थायामत्र कारण-स्वरूपस्य तत्कर्मणः त्रिविधं निवासस्थानं निर्धारितं चित्ताकाश चिदाकाशं-महाकाशं चेति। एकमनुष्यस्यान्तःकरणावच्छिन्नमाकाशं चित्ताकाश-नाम्ना, एकब्रह्माण्डसमष्टिभूतान्तःकरणावच्छिन्नाकाशं चिदाकाशनाम्ना, अर्थात् पिण्डस्याकाशं चित्ताकाशसंज्ञया ब्रह्माण्डस्याकाश चिदाकाशनाम-धेयेन, अनन्तकोटिब्रह्माण्डावच्छिन्नाकाशं महाकाशाभिधानेनाभिधीयते। विज्ञानमिदमन्यप्रकारतोऽप्यवधेयम्, यथा—अधिभौतिकसृष्टिसम्बन्धयुक्त चिदाकाशम् आध्यात्मिकसृष्टिसम्बन्धसम्वलितं महाकाशं चेति त्रिविधमा-काशं दैवीमीमांसाऽपरनामकमध्यमीमांसादर्शने सृष्टिप्रकरणे सविस्तरं वर्णितमास्ते ॥ ७६ ॥

त्रयाणामपि यथायोग्यसम्बन्धो निरूप्यते—

**त्रयाणां त्रिभिः सम्बन्धः ॥ ७७ ॥**

अत्र जन्मनि जन्मान्तरेषु वा जीवेन यावन्तो बीजस्वरूपस्व-संस्कारा संगृह्यन्ते ते प्रारब्ध-क्रियमाणासञ्चितसंज्ञया तिसृभिः श्रेणीभि विभज्यन्ते। एकस्य जन्मनः पूर्वं यज्जन्मरूपिणो वृक्षस्यकृते यावन्ति संस्कारराशिबीजानि सन्ति तानि प्रारब्धसंज्ञयाऽभिधीयन्ते। जीवकृतानां नवीनकर्मणां संग्रहः क्रियमाणसंस्कार इत्युच्यते। जीवस्यानन्तकोटि-जन्मनामनन्तसंस्कारराशिबीजानि, येषामङ्कुरोत्पत्तिकालो नागतस्तानि संचितनाम्नाऽभिधीयन्ते। वस्तुतः प्रारब्धसंस्कारेण चित्ताकाशस्य क्रियमाणसंस्कारेण चिदाकाशस्य, सञ्चितसंस्कारेण च प्रधानसम्बन्धो महाकाशेन च निर्धारितो वर्तते। आकाशत्रयेऽपि परस्परं नास्ति भेदः। आद्यमाकाशद्वयम् यथा किल घटाकाशो मठाकाशो महाकाशः परस्पर-मभिन्नोऽप्युपाधिभेदतो भिद्यते, तथाऽत्रापि त्रिविधाकाशैकत्वेऽपि कर्मबीज-संस्काराणामेकत्वेऽपि संस्कारोत्पत्तिकालमनुसृत्य स्थानविभागो विहितः। त्रयोऽपि विभागा एकस्यैवाकाशस्य स्तरविशेषा अवगन्तव्याः। यथा वै

घटाकाशे मठाकाशे च महाकाशमेकमद्वितीयमेव परन्तु घटाकाशस्य स्तरो निम्नकोटिगः, मठाकाशस्य स्तरस्तस्मादीषदधिकः, महाकाशस्य च स्तरः सर्वव्यापकश्चेति, तदीयस्तरतारतम्येन विकीर्णसंस्कार-समूहाङ्कुरोत्पत्तिरूपायाः शक्तेश्चापि तारतम्यं विद्यते। अत एव त्रयाणामपि तेषां स्वतन्त्रसत्ता स्थिरीकृता, कर्मबीजविभागोऽपि त्रिधा विभक्तः ॥ ७७ ॥

तृतीयस्य स्वरूपमुच्यते—

## तृतीयं नित्यमेकनाद्यनन्तत्वात् ॥ ७८ ।

तृतीयं महाकाशं आद्यन्तरहितत्वान् नित्यम् अद्वितीयं च। श्रीभगवतो विराड्देहेन सम्बन्धसत्त्वात् महाकाशम् आद्यन्तरहितमवधेयम्। यतः श्रीमद्भगवतो विराट्स्वरूपमप्याद्यन्तहीनं विद्यते। अतो महाकाशमपि विराड्रूपधारि श्रीपरमेश्वरसदृशमेकं नित्यस्वरूपतो विराजमानं च। यथैकस्मिन् ब्रह्माण्डेऽनेकानि पिण्डानि समुत्पद्यन्ते, विलीयन्ते च तथैव महाकाशसम्बन्धयुक्तपरमेश्वरविराड्वपुषि अनन्तकोटिब्रह्माण्डानि समुत्पद्यन्ते विलीयन्ते च। किन्तु श्रीभगवतो विराड्देहेन सम्बन्धसंयुक्त महाकाशं सदैवैकरूपतो विराजते ॥ ७८ ॥

अन्ययोर्द्वयोः स्वरूपं निगद्यते—

## अपरे सादिसान्ते ॥ ७९ ॥

पिण्डब्रह्माण्डयोः सम्बन्धयुक्ते चित्ताकाशचिदाकाशे सादिसान्ते विद्येते। प्रत्येकपिण्डमिव ब्रह्माण्डमपि प्रत्येकं सादि सान्तं च। अतः कारणादुभयसम्बन्धयुक्तमाकाशद्वयमवश्यमेव सादि सान्तमवधेयम्। यथा किल घटे नष्टे घटाकाशस्य मठे नष्टे च मठाकाशस्य नाशो जायते, यत्, उपाधिनाशत्वाद् द्वे एव महाकाशे सम्मिलिते बभूवतुस्तथैव सादिसान्तं चित्ताकाशं पिण्डस्थजीवे मुक्ते सति तदीयबन्धनकेन्द्रस्य नाशे जाते कर्मबीजसंस्काररक्षोपयोगि पिण्डाकाशं महाकाशे विलीयते, सादि सान्तं

चिदाकाशमपि ब्रह्माण्डस्य महाप्रलये तदाकाशमपि महाकाशे विलीयते। पिण्डब्रह्माण्डविनाशे कर्मबीजस्वरूपः संस्कारसमूहः कुत्र कथं वा गच्छतीति शङ्कां समाधत्ते। तथा हि मुक्तजीवपिण्डपञ्चभूतानि प्रकृतेर्यथायोग्यस्थानेषु विलीयन्ते तदीयचित्ताकाशं स्वकेन्द्रमपहाय चिदाकाशे विलयं प्रपद्यते। जीवकेन्द्रेण सम्बन्धयुक्तानि कर्मबीजानि ब्रह्माण्डकेन्द्रमाश्रित्य ब्रह्माण्डप्रकृतेराश्रयं कुर्वाणानि ब्रह्माण्डचिदाकाशे स्थानमधिगत्य तद्ब्रह्माण्डीयभाविन्यां फलोत्पत्तौ सहायकानि जायन्ते। एवमेव महाप्रलयगर्भे विलीने चैकब्रह्माण्डे तद्ब्रह्माण्डपञ्चभूतसमूहो मतान्तरेण परमाणुरूपे वा स्वकीयकारणे वा विलीयते। परमिदं सुनिश्चितमेव यद् ब्रह्माण्डं तत् केनापि रूपेण मूलप्रकृतेरङ्गे प्रविश्य निजास्तित्वं विनाशयति। तदानीं तद्ब्रह्माण्डकर्मबीजधारकं चिदाकाशं नैजास्तित्वं विहाय महाकाशे विलयमुपढौकते। पुनर्ब्रह्माण्डे सृष्टिः "यथापूर्वमकल्पयत्" इति श्रौतविज्ञानमनुसृत्य बोभूयते। एतन्निश्चितत्वादिदमभ्युपगन्तव्यमेव यत् समष्टिकर्मबीजान्यपि नूनमेव कुत्रचित्तिष्ठन्ति। तदानीं महाप्रलये तानि यत्र स्थितिमङ्गीकुर्वते, आकाशस्यानाद्यनन्तं सर्वव्यापकं तत्स्तरं महाकाशमुच्यते। एवमभ्युपगतौ नास्ति शङ्कावसरः। जीवेन साकं क्रियमाणसञ्चितसंस्कारयोः सम्बन्धस्तिष्ठति न वा? यदि तिष्ठति तर्हि जीवकेन्द्रे विद्यमाने कथं ते संस्कारास्तिष्ठन्ति, नष्टे च कामवस्थां प्राप्नुवन्तीत्यादिशङ्कासमाहितये निम्ननिर्दिष्टविज्ञानमवधेयम्—

महाकाशे यथा चित्ताकाशचिदाकाशयोः समावेशः, सर्वव्यापके चाकाशे घटाकाशमठाकाशयोर्यथा समावेशस्तथैव चित्ताकाशे चिदाकाशे च चित्ताकाशचिदाकाशमहाकाशानां सम्बन्धो विद्यते। केवलं त्रीण्यपि स्तराणि स्वतन्त्राणि सन्ति। जीवचित्ताकाशेन सह प्रारब्धसंस्काराणां प्रधानसम्बन्धस्तिष्ठति। यतस्तेऽङ्कुरितदशायां तिष्ठन्ति। क्रियमाणसञ्चितसंस्कारा अपि गौणरूपेण निजस्थितिं लभन्त एव। यद्येवं न भवेत् तर्हि जीवेन क्रियमाणाः संस्काराः कथं स्मर्यन्ते। यतः स्मृतिसम्बन्धो जीवस्य

चित्ताकाशत एव सम्भवति, अतो जीवस्य क्रियमाणसंस्काराश्चिदाकाश-स्तरं प्राप्नुवन्तः स्मृतिमाश्रित्य गौणरूपेण चित्ताकाशेनापि सम्बन्धसंयुक्ता भवन्ति, जन्मान्तरकाले समुपस्थिते ते क्रियमाणा संस्कारस्वरूपं बिभ्रतः कर्मबीजावस्थानुसारेण चित्ताकाशमाविश्य प्रारब्धरूपतां प्रपद्यन्ते, केचिच्च महाकाशस्तरे समुपगम्य सञ्चितस्वरूपं धारयन्ति। जीवकेन्द्रे मुक्तिदशायां नष्टे जाते गौणरूपेण सम्बन्धसंयुक्ताः क्रियमाणसंस्कारा वा सञ्चितसंस्कारा वा सर्वेऽपि मूलप्रकृतिमाश्रयन्तो महाकाशे स्थितिं लभन्ते। समयान्तरे च ब्रह्माण्डोत्पत्तिकारणतां भजन्ते। सञ्चित-संस्कारेणापि साकं गौणसम्बन्धश्चित्ताकाशेन तिष्ठति। यतो जीवस्य जन्मान्तरे ये प्रारब्धसंस्कारा उद्भवन्ति, ते आधिक्येन सञ्चितसंस्कारा-कृष्टा एव सम्भवन्तीति ॥ ७९ ॥

उभयनाशोपाय उपवर्ण्यते—

**संस्कारप्रणाशात्तन्नाशः ॥ ८० ॥**

संस्काराणां विनाशेन तन्नाशस्तयोश्चित्ताकाशचिदाकाशयोर्नाशोऽभ्युपगन्तव्यः। वस्तुतः समष्टिव्यष्टिरूपेण ब्रह्माण्डपिण्डसम्बन्धतो बोभूयमानफलोत्पत्तिबीजानां संग्रहश्चित्तचिदाकाशयोरेव सम्भवः। महा-काशं तु विश्रान्तेर्लयस्य वा स्थानम्। तयोर्नाशविषये समुत्पद्यमानशङ्कां समाधत्ते। तथाहि—कारणविशेषेण संस्काराणां पूर्णरूपेण नाशे जाते द्वयोराकाशयोरपि विनाशो भवितुमर्हति। कर्मराज्यस्याद्यन्तमवगन्तुं कर्मबीजानामाश्रयस्वरूपयोश्चित्तचिदाकाशयोरप्याद्यन्तावधारणीयौ। यथा ग्रन्थीनां बन्धने शिथिलीकरणे चैकविधैव हस्तक्रिया दृश्यते, किन्तु कया क्रियया ग्रन्थयो बध्यन्तेऽपरया च शिथिलीक्रियन्ते, तथैव कर्मणः सुकौशल-रहितानुष्ठानतो जीवो बन्धनदशां प्राप्नोति, सुकौशलपूर्णप्रक्रियया च मुक्तिमधिगच्छति। अतो याभिः सुकौशलपूर्णप्रक्रियाभिः कर्मबीज-संस्काराणां नाशसम्भावना ताभिरेव द्वयोराकाशयोरपि विनाशः सम्भवः। तत्त्वज्ञानादिलब्ध्या वासनानाशत उपयोगिसाधनसमूहसाहाय्यबलेन

साधकः स्वसंस्कारहानिं सम्पादयति, तदानीं तेन मुक्तात्मना सम्बन्ध-युक्तयोर्द्वयोराकाशयोरपि विलयो जायते। कर्मोपासनाज्ञानकाण्डसाधनेन साधको यदाऽऽत्मज्ञानलाभेन निःसङ्गो निष्क्रियश्च जायते, तदानीमात्म-ज्ञानद्वारा वासनामयमनोनाशेन तत्पिण्डस्य जैवकेन्द्रं प्रणश्यति। जैवकेन्द्रे नाशमुपढौकमाने ततः समाकृष्टः क्रियमाणसञ्चितकर्मबीजसंस्कारसमूहः स्वत एव पृथग् भूत्वा सर्वविलयस्थानं प्रकृतिमाश्रयन्ति। एवं सति तज्जैवकेन्द्र-सम्बन्धसमुद्भूत चित्तचिदाकाशस्वरूपमपि स्वत एव प्रणाशमुपपद्यते॥८०॥

विज्ञानमिदं पुनः स्पष्टयति—

## तदन्ते क्रियावसानात् ॥ ८१ ॥

संस्काराणामन्ते क्रियाणामवसानत्वात् प्रणाश उभयोश्चित्तचिदा-काशयोः स्वतः सिद्धः। यदि संस्काराः कर्मणां बीजभूतास्तर्हि तेषां विनाशेन कर्मविनाशः स्वतः एव सिध्यति। यदि कस्यचन वृक्षविशेषस्य बीजानि पृथिव्यां नाशमुपगच्छेयुः, तद्बीजानां संग्रहोपायो न स्यात् तर्हि संसारतः सर्वस्मादेव तज्जातिवृक्षहानिर्भवेति। उदाहरणेनैतेनेदमवधेयम् यत् सुकौशलपूर्णसाधनद्वारा कर्मबीजसंस्कारा विनाशमुपगच्छेयुस्तदा कर्मणां प्रणाशोऽपि स्वतः सिद्ध एव ॥ ८१ ॥

प्रसङ्गतो जीवसम्बन्धं निरूपयति—

## जीवः शरीरत्रयसम्बद्धः ॥ ८२ ॥

कर्माधीनो जीवस्त्रिभिः कारण-सूक्ष्म-स्थूलरूपैः शरीरैः सम्बन्धसंयुक्तो वेद्यः। जीवसृष्टिपूर्णावस्थाया प्रथमोत्पन्ना चिज्जडग्रन्थिरेव कारणशरीरम्। चतुर्विंशतितत्त्वेषु स्थूलपञ्चभूतातिरिक्ततत्त्वैः सूक्ष्मं शरीरमुत्पद्यते। शरीर-द्वयमिदं गमागमचक्रतो जन्मान्तरं प्राप्नोति। स्थूल शरीरं तदुच्यते यन्मरणानन्तरमिहैव तिष्ठति। तच्च पञ्चीकृतमहाभूतैरुत्पद्यते। तत्र च पञ्चीकृततत्त्वानां तादृशी शृङ्खला तिष्ठति यादृशी लोकेऽत्र भवितुमुचिता। उदाहृत्येदमवधारणीयं यत् प्रेतलोकस्य स्थूलशरीरं वायुतत्त्वप्रधानम्,

स्वर्गलोकस्याग्नितत्त्वप्रधानं मृत्युलोकस्य च पृथ्वीतत्त्वप्रधानमित्यादि। शरीरविज्ञानमिदमन्यप्रकारेणाप्यवगन्तुं शक्यते—पञ्चकोषेषु आनन्दमयः कोषः कारणशरीरम् विज्ञानमयो मनोमयः प्राणमयश्च मिलित्वा सूक्ष्मशरीरम्, केवलमन्नमयः कोषश्च स्थूलशरीरमित्युच्यते। एतच्छरीरत्रयसम्बद्धो जीवः स्वकीयकर्मवेगेन सृष्टिप्रवाहे प्रवहति ॥ ८२ ॥

शरीरत्रयमिदं केन सम्बन्धयुक्तमित्युच्यते—

**त्रिभावसम्बद्धं तदतः ॥ ८३ ॥**

अतः कारणात् त्रिविधमपि शरीरं तत् त्रिभावतः, अध्यात्माधिदैवाधिभूतरूपतः सम्बद्धं सम्बन्धयुक्तमवगन्तव्यम्। पूर्वोक्तानि त्रीण्यपि शरीराणि सृष्टेस्त्रिभिर्भावैः सम्बध्यन्ते। यथा हि सर्गस्य सर्वेऽपि पदार्थास्त्रिभावात्मकास्तथैव शरीरत्रयस्यापि त्रिभावात्मकत्वं स्वतः सिद्धम्। कारणशरीरमध्यात्मं सूक्ष्मशरीरमधिदैवम्, स्थूलशरीरमधिभूतमिति त्रीणि शरीराणि विद्यन्ते। लोकान्तरं प्रतिष्ठमाने जीवे स्थूलशरीरं तत्रैव तिष्ठतीति हेतोर्भौमिकसम्बन्धविशेषत्वात्तस्याधिभौतिकता निश्चितैव सूक्ष्मशरीरस्याश्रयेण दैवकार्यं सम्पद्यतेऽतस्तस्याधिदैविकताऽपि युक्तियुक्तैव, सर्वेषां कारणत्वात् कारणशरीरस्याध्यात्मिकता निश्चप्रचैव ॥८३॥

कर्मप्रसङ्गतः सृष्टिविस्तारं वर्णयति—

**कर्मणा त्रिभावात्मिका सृष्टिः ॥ ८४ ॥**

सृष्टिकारणेन कर्मणा त्रिभावात्मिका सृष्टिर्जायते। यतः सर्गस्य सर्वेऽपि पदार्थास्त्रिभावात्मका अतः सृष्टिरपि आध्यात्मिकी आधिदैविकी आधिभौतिकी चेति त्रिविधा विज्ञातव्या। पाञ्चभौतिकदृश्यप्रपञ्चस्य यत्रांशे चित्सत्तायाः प्राधान्यं ज्ञानप्रकाशयोः सम्बन्धश्चासावंशोऽध्यात्मिको विज्ञेयः। यत्र च क्रियाशीलता, यस्य द्वारेण वा देवाः स्वकर्त्तव्यतत्पराः, सृष्टेस्तदंशोऽधिदैवो वेदितव्यः, यत्र च स्थूलत्वजड़त्वाज्ञानात्वादिसम्बन्धः सोंऽशोऽधिभूतो मन्तव्यः ॥ ८४ ॥

प्रसङ्गादभिधीयते—

**तेनातस्तदधिष्ठातृसम्वर्द्धनम् ॥ ८५ ॥**

तेन कारणेन कर्मद्वारा तदधिष्ठातृणां संवर्द्धनं जायते। दृश्यप्रपञ्च-कारणं कर्मैव, कर्मणैव सृष्टिस्थितिप्रलयाः सम्पद्यन्ते, अतः कर्मणा त्रिभावात्मकक्रमोन्नतिः कथं सम्भवेत्युच्यते। सृष्टेराध्यात्माधिदैवाधि-भूतविभागानां चालकाः क्रमन्न ऋषिदेवपितरः सन्ति। सगुणब्रह्मस्वरूपस्य त्रिमूर्त्तेः प्रतिनिधयः ऋषिदेवपितरः अध्यात्माधिदैवाधिभूतराज्यानां सञ्चालनं, संरक्षणं, संवर्द्धनं च कुर्वते। कर्मणैव त्रिविधश्रेणयो देवा इमे प्रसद्य साधकस्य त्रिविधां समुन्नतिं सम्पादयन्ति, संवर्धिताश्च ते ब्रह्माण्डस्य एवं स्वमधिकारमुन्नमयन्ति। एतन्नियममनुसृत्य कर्मप्रभावः प्रोक्ताधिदैवसम्बन्धात् जगदुन्नतेः कारणतां बिभर्त्ति॥ ८५॥

केन केन कर्मणा कस्य कस्य तृप्तिर्भवतीत्युच्यते—

**तत्सम्पृक्तकर्मणा तत्तुष्टिः ॥ ८६ ॥**

स्वस्वसम्बन्धितेन कर्मणा तेषाम् ऋषिदेवपितृणां तृप्तिर्भवति। सृष्टिप्रपञ्चे ज्ञानविभागस्य चालका व्यवस्थापकाश्च ऋषयः, कर्मण-स्तत्फलस्य च व्यवस्थापका देवाः, स्थूलशरीरादीनां विषयाणां व्यवस्थाप-काश्च पितरो विद्यन्ते। अतो ज्ञानसम्बन्धीयकर्मणा ऋषयः, यज्ञादिद्वारा देवाः श्राद्धादिभिश्च पितरस्तृप्तिमनुभवन्ति। एवं तृप्तास्ते स्वं स्वमधिकार-मनुसृत्य जगतः समुन्नतिं कुर्वते। वस्तुनस्तु ज्ञानविद्यादीनामभिवर्धनानि शारीरिकवाचनिकमानसिककार्याणि सर्वाण्यपि ऋषिसंवर्धनकराणि ज्ञेयानि; यज्ञयागसदाचारानुष्ठानादारभ्य वर्णाश्रमधर्मपरिपालनं यावद् यावानपि साधारणविशेषधर्मक्रियासिद्धांशो वर्त्तते, तेन देवाः संवृद्धिमुप-यान्ति, तथैव पितृयज्ञ-पितृपूजन-श्राद्धतर्पणादिभिः पितरस्तृप्तिमावहन्ते। एतेषां त्रयाणां संवर्द्धनेन तत्तत्सम्बन्धीयभावराज्याधिकाराणां यथाक्रम-मुन्नतिर्निश्चिता। अतः साधका यथोचितकर्मानुष्ठानैः सर्वविधोन्नति-सम्पादने सामर्थ्यं बिभ्रति॥ ८६॥

प्रासङ्गिकमभिधत्ते—

**प्रतिब्रह्माण्डं भिन्नास्ते ॥ ८७ ॥**

ते देवर्षिपितरः प्रतिब्रह्माण्डं भिन्ना भिन्ना विद्यन्ते। बहुविधपिण्ड-समन्वितचतुर्दशभुवनात्मकब्रह्माण्डस्य संरक्षणसञ्चालनसंवर्धनार्थं अनन्त-कोटिब्रह्माण्डं पृथक् पृथग् ऋषयो देवाः पितरश्च नियुक्ता विराजन्ते। वस्तुतः श्रेणीत्रयविभक्ता इमे देवाः सगुणब्रह्मत्रिमूर्त्तेः प्रतिनिधयः सन्ति। कर्मानुसारेणैव सुनिश्चितेषु त्रिष्वपि पदाधिकारेषु परिवर्त्तनमपि सम्भाव्यते। यथा एकस्य वनस्य देवता, पर्वतस्य देवता वा एकस्या नद्या देवता वा, यावत् तत्तद्वनपर्वतनदीनामस्तिता, तावदेव तत्तद्दैवतानैमित्तिक-पदान्यपि तिष्ठन्ति। इन्द्रवरुणादिदेवपदानां नित्यत्वेऽपि तत्पदाधिष्ठातॄणा-मवनतिरुन्नतिर्वा सम्भाव्यते। पितॄणां सम्बन्धो मनुष्ययोनितः प्रारभ्यते। मृत्युलोकसम्बन्धयुक्ताः पितरः पितृलोके निवसन्ति, पितृलोको धर्मराज-यमस्याधिकारान्तर्गतः। देवलोकसम्बन्धिनः पितर ऊर्द्ध्वलोकेषु निव-सन्ति। ऋषयोऽनेकाधिकारवन्तः सन्ति, तेषामावासः सूक्ष्मलोकेषु विद्यते। मृत्युलोकेऽत्र ऋषीणां देवानामवतारा अपि सम्भवन्ति ॥ ८७ ॥

तदधिकारा निरूप्यन्ते—

**समष्टिव्यष्ट्योः सम्बन्धस्तेषाम् ॥ ८८ ॥**

समष्टिभूते ब्रह्माण्डे व्यष्टिरूपे पिण्डे तेषां देवानां सम्बन्धो वर्त्तते, देवानां सम्बन्धः सर्वत्र विद्यत इत्यर्थः। सूक्ष्मं दैवं जगत् सर्वमूलम्। जड़कर्माणि चेतनैर्देवैश्चाल्यन्ते। चतुर्विधभूतसंघीयोद्भिज्जस्वेदजादि-योनयः, नदीपर्वतसमुद्राद्याः स्थूलसम्बन्धिन्यो विभूतयः, सुवर्णलौहादि-धातवः, स्थावरा जङ्गमा वा सृष्टिः, स्थूलो मृत्युलोकः, सूक्ष्मा देवलोकाः, व्यष्टिभूतं पिण्डं समष्टिभूतं ब्रह्माण्डम् सर्वत्रैव दैवशक्तिसम्बन्धो राजतेतराम्। कर्मशक्त्यैव सर्वे चाल्यन्ते सुरक्ष्यन्ते च। कर्मजड़रूपं जड़स्य परिचालनार्थं चेतनशक्तिसाहाय्यमवश्यमपेक्षितम्। अतः कर्मसत्ता-

सम्बन्धेन देवानामस्तित्वं समष्टौ व्यष्टौ वा देवराजस्य परोक्षः साक्षाद् वा सम्बन्धो वर्त्तत एवेति ॥ ८८ ॥

कर्मप्रवाहगतयो वर्ण्यन्ते—

**द्विविधः कर्मप्रवाहोऽनुलोमविलोमभेदात् ॥ ८९ ॥**

अनुलोमविलोमभेदेन कर्मणां प्रवाहो गतिर्भागद्वयेन विभज्यते। द्वैत-प्रपञ्चे या गतिरात्मनोऽभिमुखं गच्छति, साऽनुलोमा, या चात्माभिमुखतो नीचैरनात्मनोऽभिमुखं प्रचरति, सा प्रविलोमेत्युच्यते ॥ ८९ ॥

विज्ञानमेतत् स्पष्टयति—

**चेतनजडसम्बद्धौ ॥ ९० ॥**

तयोः किल स्थावरजङ्गमात्मकसर्गतो यथाक्रमसम्बन्धो वर्त्तते। एतयोरेकः कर्मप्रवाहः विलोमो जड़राज्यव्यापी, द्वितीयोऽनुलोमश्चेतन-राज्यव्यापी बोध्यः। द्वयोरप्येतयोः कर्मप्रवाहयोर्यो जडाच्चैतन्यावच्छिन्न-स्यात्मनोभिमुखं प्रवहति, स चेतनराज्यव्यापी प्रवाहोऽवगन्तव्यः। प्रवाहोऽयं जड़ात्परमाणोनिर्गत्य चिज्जड़ग्रन्थिमुत्पादयन् चतुरशीति-लक्षयोनिषु भ्रामयित्वा जीवं मानवपिण्डं प्रापयति, पुनश्च गतागत-चक्रस्य नानावस्थासु भ्रामयन् परमात्मस्वरूपे स्वस्वरूपः पारावारे संगमयति। द्वितीयः प्रवाहश्चैतन्याज्जडाभिमुखं प्रवहन् यावदनात्म-पदार्थसृष्टेः कारणतां प्राप्नोति। जीवतत्त्वातिरिक्ता सर्वाऽपि सृष्टिरेत-त्प्रवाहान्तर्गता कदाचिज्जीवा अपि एतत्प्रवाहचक्रे पतित्वा दण्डार्हा भूत्वा नीचैरवतरन्ति। तथा किल यमलार्जुनयोर्वृक्षत्वप्राप्तिः, भरतस्य मुने मृगत्वाधिगमश्च। वस्तुतो जडेन जगतैव केवलमेतत्प्रवाहसम्बन्धो वर्तते। कर्मणश्चेतनप्रवाहे जीवस्य जीवत्वं दैवसाहाय्यं चेत्युभयमेव सहायकं भवति। द्वितीये जडप्रवाहे केवलं देवगणा एव साहाय्यकारिणो जायन्ते। ते देवगणा नदीपर्वतपञ्चभूतधातुरत्नादीनामधिष्ठातारोऽभिधीयन्ते। एवं हि कर्म प्रवाह द्वयप्रवाहितं भूत्वा विराड्रूपधारिणः परमात्मनो देहमभिसिञ्चति ॥९०॥

भेदान्तरं व्याचष्टे—

**द्विविधः प्रथमः ॥ ९१ ॥**

आद्यो जीवमयः प्रवाहो द्विविधः द्विप्रकारको विज्ञेयः। तस्य प्रवाहस्य शाखाद्वयमवगन्तव्यमित्यर्थः। नदीशाखा इयं परस्परं मिलित्वा सुविपुलैकनदीरूपेण परिणमते, यथा भागीरथी यमुनया मिलित्वा प्राबल्यं धारयति, तथैव जीवमयी धारा शाखाद्वयेन प्रवहन्त्यवसाने ह्येकीभूय ब्रह्मसमुद्रे विलयं गच्छति ॥ ९१ ॥

विज्ञानमिदं स्पष्टयति—

**प्राकृतिक एकः स्वतन्त्रोऽपरः ॥ ९२ ॥**

एतच्छाखाद्वयरहस्यं सुस्पष्टं विधातुं महर्षिः सूत्रकारः सूत्रमिदमवतारयति। सहजकर्मसम्बन्धिनी प्राकृतिकी, जैवकर्मसम्बन्धिनी तद्भिन्ना स्वाधीना चेति जैवी धारा द्विधा विभज्यते। प्राकृतिकी जीवधारोद्भिज्जादेः प्रकटीभूय मनुष्यत्वप्राप्तौ पूर्णरूपेण गुप्ता सती जीवन्मुक्ते महात्मनि प्रकटीभवति। स्वाधीना किल धारा मानवीये दैवे च पिण्डे समुत्पद्य गमनागमनचक्रे परिभ्रमन्ती पुनर्मुक्तिभूमिमासाद्य सहजधारायां विलीयते। वस्तुतः शाखाद्वयमप्येतज्जीवमयस्य प्रवाहस्यैवाङ्गभूतमवगन्तव्यम् ॥ ९२ ॥

द्वयोः कार्यमभिधीयते—

**मुक्तिबन्धनिमित्ते ॥ ९३ ॥**

द्वयोरेतयोः प्राकृतिकी जीवधारा विमुक्तेः स्वाधीना च बन्धनस्य हेतुतामापद्यते। जीवो यदा क्रमशः स्वीयपञ्चकोषपरिपूर्णतां सम्पादयन् मनुष्यत्वमुपैति, तदाऽसौ स्वस्य पिण्डस्याधीश्वरो जायते। तदानीमेष स्वाधीनतामासाद्य निजनूतनवासनाद्वारा नवीनानि कर्माणि सगृह्णन् आवागमनचक्रस्य स्थितिशीलतां सम्पादयति। स्वतन्त्रेयं जीवधारा बन्धनकारणभूता भवति। द्वितीया किल प्राकृतिकनियममनुसृत्य स्वाभाविकस्वरूपतः प्रवहन्ती गमागमचक्रं विनाश्य मुक्तेर्हेतुतामधिगच्छति। यथा

किल तरलतरङ्गा पतितपावनी गङ्गा वस्तुमात्रमेव निजप्रवाहे प्रवाहयन्ती महार्णवं प्रापयति। यदि किञ्चिद् वस्तु मध्येप्रवाहमावर्त्तग्रस्तं चेत्तदपि कालेनावर्त्तान्मोचयित्वा, पुनरपि सरलगत्या वारिधिं नेनीयते, तथैव प्राकृतिकी कर्मधारा प्रथमदशायामुद्भिज्जादितो क्रमोन्नतिं सम्पादयन्ती जीवान् मानवत्वमुपढौकते। तदनन्तरं चावागमनचक्रग्रस्तानपि जीवान् आवर्त्तसहस्रेभ्यो विमोच्य पुनस्तेभ्यो मुक्तिं वितरति ॥ ९३ ॥

प्रथमप्रवाहस्य परिचयोऽत्र दीयते—

## आद्यो देवरक्षितः सारल्यात् ॥ ९४ ॥

प्राकृतिकस्वतन्त्रयोर्द्वयोश्चेतनप्रवाहयोराद्यः प्राकृतिकः सारल्येन हेतुना देवैः संरक्षितः। दैवीमीमांसादर्शने सविस्तरमिदं सिद्धान्तितं यत् सहजपिण्डेषु प्रत्येकयोनिसंरक्षणशीलाः पृथक् पृथग्रूपेण देवाः समाम्नाताः। असौ प्राकृतिकः प्रवाहो गुप्तरूपेण जीवन्मुक्तमहापुरुषे तदीयवासनाजालस्य विलीयमानत्वात् स्वेच्छया न किमपि कार्यं सम्पाद्यते, स च महात्मा दैवेच्छाप्रेरितो जगत्कल्याणकरकार्यकलापं विधत्ते यथा किल स्वेदजाण्डजादिजीवाः स्वस्वप्रकृतिवशगा भोगेषु प्रवर्त्तन्ते, तथैवासावपि प्रारब्धसंस्कारवेगतः कर्मणि प्रवर्त्तमानो बोभवीति। यद्वदज्ञानवशतामुपेत्य मानवेतरजीवाः कर्माणि विदधते, तद्वदेव स्वरूपस्थिता जीवन्मुक्ता महात्मानो जैववासनाविरहिताः प्रारब्धवेगतः क्रियाकलापमनुतिष्ठन्ति। दशायामत्र स्वतः सिध्यति दैवसाहाय्यम्, यतो जडकर्मणां चालका देवा एव। अन्यच्च जीवन्मुक्ता ईशकोटिगा यदि जगत्कल्याणनिरताः क्रियमाणकर्मशीलवत् प्रतीयेरन् तर्हीदमवधेयं यत् ते दैवक्रियानिष्पत्तये भगवत्प्रेरिता एवं विदधत इति ॥ ९४॥

द्वितीयस्य विशिष्टः परिचयो दीयते—

## विभूत्या रक्षितोऽपरो वैपरीत्यात् ॥ ९५ ॥

अपरः स्वाधीनप्रवाहः प्राकृतिकप्रवाहविपरीतत्वात् विभूतिद्वारा सुरक्षितः सुव्यवस्थापितः। बहुशाखायुक्ते सकामे स्वाधीनप्रवाहे आनन्त्या-

ज्जैवकर्मणस्तत्संरक्षणे समपेक्षितं किल दैवसाहाय्यम्। यतोहि कर्मणः संचालकाः फलदातारोऽपि देवा एव; तथापि मानवपिण्डसमुद्भूतिभिः किल तदीया सदसद्व्यवस्था विधीयते। प्राकृतिकप्रवाहः खल्वेकरसः स्वाधीनस्तु न तथा। दुर्गासप्तशतीप्रतिपादितदेवीमाहात्म्यप्रोक्तरक्तबीजवद् विस्तृतिमापन्ना जैव्यो वासना बहुशाखा ह्यनन्ताश्च। कर्मणो जडत्वेन हेतुना प्रेरकत्वफलदातृत्वविचारे क्रियमाणे सर्वावस्थासु गौणरूपेण दैव्यां सहायतायां सत्यामपि स्वाधीनप्रवाहे विभूतिसाहाय्यस्य प्राधान्यम्। यतोहि जैववासनाप्राबल्यात् दैवसाहाय्यगौणत्वाच्च मानवलोकसमुत्पन्नविभूति-द्वारा तत्संरक्षणमत्यावश्यकम्। साधारणमानवेतरचतुर्विधभूतसङ्घेषु च प्रकृतिवेगेनैव कर्म सम्पद्यते। अतः प्राकृतिकप्रवाहे नितरां विद्यते सारल्यम्। किन्तु स्वाधीनप्रवाहे जीवः स्वातन्त्र्येण सदसत्संस्कारान् संगृह्णन् स्वकीयं वासनाजालं निरन्तरं प्रवर्धयते, अतः किलापरः प्रवाहो विपरीतो बहुशाखासंयुक्तोऽनन्तो जटिलश्च। मानवानां स्वाधीनताऽव-लम्बनेन दैवी दृष्टिर्गौणायते, तत्प्रवाहव्यवस्थापनं देवैरुपेक्ष्यते। सुतरां सर्व-शक्तिमतः सर्वहितनिरतस्य भगवतः श्रीपरमेशितुरीहया तदीयजगद्धितकरान् नियमानवलम्बमानै राजाचार्यगुरुगृहपति-समाजपतिप्रभृतिभिर्विभूति-स्वरूपैः प्रवाहोऽयं संरक्ष्यते। अत एव मानवसमाजे राजानुशासन-शब्दानुशासन-योगानुशासनानां प्रयोजनीयता ॥ ९५ ॥

विज्ञानमिदं सुस्पष्टयति—

## तद्देवापेक्ष्यं जडत्वात् ॥ ९६ ॥

कर्मणो जडत्वाद्धेतोस्तद्दैवसापेक्ष्यमवधार्यम्। प्रथमं हि कर्मणो विभागत्रयम्, ततो जैवकर्मणः श्रेणीद्वयम्, तत्रापि दैवसाहाय्यस्य गौणत्वं मुख्यत्वं च विचारयतो जिज्ञासमानस्य हृदयस्थां शङ्कां समाधातुं पूज्य-चरणो महर्षिः सूत्रकृदभिधत्ते—कुत्रचिन्मुख्यत्वे गौणत्वेऽपि सिद्धान्ततः सर्वकर्ममूलेषु दैवसाहाय्यप्रयोजनीयता स्थायिनी। वस्तुतः कर्मणो जड-त्वात्तत्सञ्चालनं चेतनशक्तिसापेक्ष्यम्। यत्तु कैश्चिद्दार्शनिकैरुच्यते

यद्विनापि चेतनसाहाय्यं कर्म क्रियाशीलं तदसङ्गतम्। जडपदार्थास्तच्छक्तयो वा दैवसाहाय्यमन्तरा न नियमेन कार्यमनुष्ठातुमर्हन्ति, जडशृङ्खलायाश्चेतनसंसाधितत्वात्। जडशक्तयोऽपि कुत्रापि स्वयं कार्यंकारिण्यो दृश्यन्ते इति चेन्न, चुम्बकस्य लौहाकर्षणं काचस्य वह्न्युत्पादनं, मेघस्य वज्रनिपातनं चेत्यादि स्वतः क्रियाशीलमपि तन्मूले बुद्धिजीविन्याश्चेतनशक्तेरवश्यं सद्भावोऽन्यथा तत्र शृङ्खलाबद्धं कार्यमसम्भवम्, व्यवस्थाशृङ्खलाभावात्तदुपयोगस्य नाणोयोपि मूल्यम्। अतो लौकिकजडशक्तीनां बुद्धिमन्मानवचालितत्वेऽलौकिकजडशक्तिसमष्टीनां देवचालितत्वे तत्तत्सदुपयोगसम्भवः। सुतरां समभ्युपगन्तव्यमेवेदं यज् जडशक्तिसम्पन्नस्य कर्मणश्चेतनशक्तिसम्पन्नानां देवानां सर्वशक्तिकेन्द्रस्वरूपसगुणब्रह्मणः परमेश्वरस्य वा द्वारा चालितत्वं विना तदुपयोगो नितरामसम्भव एव। अतः सिद्धमिदं यत् जडस्य कर्मणः क्रियाशीलता चेतनसाहाय्यसापेक्षेति ॥ ९६ ॥

सहजस्य कर्मणः सम्बन्धे प्रोच्यते—

**सहजमायत्तं प्रकृतेः ॥ ९७ ॥**

सहजं कर्म प्रकृतेरधीनमित्यर्थः। सहजकर्मणः सविस्तरं स्वरूपवर्णनं पूर्वमेव प्रतिपादितम्। प्रकृतेस्त्रिगुणतरङ्गसहजातत्वात्सहजमिति तन्नाम। तेनैतस्य प्रकृतिनिघ्नता स्वतः सिद्धा। सहजकर्मविज्जडग्रन्थिसमुद्भूतो जीवः स्वत एवोद्भिज्जस्वेदजादिषु भ्रम्भ्रम्यमाणो मानवयोनिमधिगच्छति, सहजकर्मणश्चैतद्गतेर्नास्ति जीवेप्सितविशेषकारणम्। केवलं प्रकृतेः स्वाभाविकया गत्यैवैतत्स्वतः सम्पद्यते। तरङ्गितायाः प्रकृतेस्तमसः सत्त्वाभिमुखं संसरणादेवेयं क्रिया सम्भोभवीति ॥ ९७ ॥

पूर्वप्रसङ्गात् तत्फलं निर्दिशति—

**तस्माद्देवसाहाय्यमपेक्ष्यम् ॥ ९८ ॥**

एतस्माद्धेतोर्देवानां साहाय्यमत्रापेक्ष्यम्। सहजकर्मणः प्रकृतिनिघ्नतया, तदीयक्रियया साकं जैववासनासम्बन्धाभावाच्च नूनमिद-

मङ्गीकार्यं तत्, तद्धि पूर्णरूपेण दैवं साहाय्यं समपेक्षते, जडत्वाद्यदि कर्म चेतनशक्तिसापेक्ष्यम्, यदि च सहजेन कर्मणा सार्द्धं जैववासनाया न कोपि सम्बन्धस्तर्हि स्वाकार्यमेवेदं यत् सहजकर्मफलोत्पत्तौ ध्रुवमेव दैवसाहाय्यसम्भवः। कर्मणः सञ्चालनं यदा मानवपिण्डस्य दैवपिण्डस्य चेच्छाशक्तिक्रियाशक्तिसाहाय्यापेक्ष्यं सहजे कर्मणि च मानवीयेच्छाशक्तिसम्बन्धात्यन्ताभावश्चेत्तर्हीदं सिध्यति यत्सहजं कर्म दैवसाहाय्यसापेक्ष्यम् ॥ ९८ ॥

इदानी जैवकर्मसम्बन्धे प्रणिगद्यते—

## जैवं जीवनिघ्नम् ॥ ९९ ॥

जैवं कर्म जीवाधीनमित्यर्थः। जैवकर्ममूले पूर्णावयवजीवस्येच्छाशक्तिः कार्यकारिणीति हेतोर्जैवं कर्म जीवाधीनमवगन्तव्यम्। सञ्चितप्रारब्धक्रियमाणसंस्काराणां मानववासनासम्भूतत्वात् तदीयसंस्कारबीजवृक्षस्वरूपस्य जैवकर्मणो मनुष्यवासना समुत्पद्यमानत्वमवश्यमेवावधेयम्, अतो जैव कर्म जीवायत्तमिति सिद्धम् ।९९॥

प्रसङ्गतस्तस्य दैवसम्बन्धं निदर्शयति—

## अतस्तदर्द्धम् ॥ १०० ॥

अतः कारणात् तत् जैवं कर्म देवानामर्धं साहाय्यमपेक्षते। सहजे कर्मणि यथा किल देवानाम् इच्छाशक्तिक्रियाशक्तिसमपेक्षा, न तथा जैवे कर्मणि। तत्रामराणां केवलं क्रियाशक्तिसाहाय्यमपेक्षितमित्यतस्तत्रार्द्धं दैवसाहाय्यमभ्युपगन्तव्यम्। जैवकर्मसंस्कारसंग्रहस्तद्वासनयैव सम्पद्यमानः। अतो जीवेच्छाशक्तिसम्बन्धाज्जैवे कर्मणि जीवस्यार्द्धसम्बन्ध एव वेदितव्यः। अन्यच्च कर्मफलदातृत्वं दैवाधीनमितिहेतोस्तत्र देवानां केवल क्रियाशक्तेरपेक्षैव, तस्मात् जैवे कर्मणि सुराणामर्द्धसम्बन्ध एव सिद्धः ॥ १०० ॥

स्थूलप्रपञ्चे कर्मसम्बन्धं निर्दिशति—

**कर्मणाकर्षणविकर्षणे स्थूलसम्बद्धे ॥ १०१ ॥**

कर्मणा हेतुभूतेन स्थूलसम्बन्धयुक्ते आकर्षणविकर्षणशक्ती समुत्पद्येते। कर्मणः प्रभावादेव स्थूलप्रपञ्चेषु प्रोक्तशक्तिद्वयाविर्भावः सूक्ष्मातिसूक्ष्मपरमाणोरारभ्य महीयो ग्रहोपग्रहं यावत् सर्वत्रैव परिलक्ष्यमाणे आकर्षणविकर्षणशक्ती कर्मजनिते एव। सर्वत्रैव स्थूलप्रपञ्चे शक्तिद्वयविद्यमानता प्रत्यक्षसिद्धा आकर्षणस्य, विकर्षणस्य तत्समन्वयस्य चेत्यवस्थात्रयं जायते। परस्परमाकृष्टाः परमाणवः पाषाणादीन् जनयन्त्येषाऽऽकर्षणदशा, विकृष्टाश्च ते तान् विनाशयन्तीतीयं विकर्षणावस्था। उभयोर्मध्ये विद्यमाना समन्वयस्थितिश्चेत्यवस्थात्रयं निर्विवादमेव। उपर्युक्तं शक्तिद्वयमवस्थात्रयञ्च सर्वमिदं समष्टिव्यष्टिकर्मजमेव ॥ १०१ ॥

प्रसङ्गतः शक्तिद्वयस्य गुणसम्बन्धो निर्दिश्यते—

**रजस्तमोमूलकमुभयम् ॥ १०२ ॥**

उभयमाकर्षणं विकर्षणं च रजोमूलकं तमोमूलकं चावगन्तव्यम्। त्रिगुणात्मकस्यैतस्य प्रपञ्चस्य सर्वाण्यप्यङ्गोपाङ्गानि न त्रिगुणभिन्नानि। संसारप्रपञ्चमूलकारणभूतायाः प्रकृतेस्त्रिगुणात्मकत्वात्तदुत्पन्नः सर्वेऽपि पदार्थास्त्रिगुणात्मकाः सिद्धाः। एतत्प्राकृतिकनियममनुसृत्याकर्षणं रजोगुणप्रादुर्भूतं विकर्षणं च तमोगुणसम्भूतमनुसन्धेयम्। प्रपञ्चस्यावस्थात्रयं प्रत्यक्षतोऽपि सिद्धम् परमाणूनामन्योन्यमाकर्षणं रजोजनितं ब्रह्मणश्चतुराननस्य सृष्टिकार्यमुच्यते, शक्तिद्वयसमन्वयो हि भगवतः श्रीविष्णोः स्थितिकार्यं, तच्च सत्त्वगुणात्मकमेव, परमाणूनां विकर्षण पृथग्भाव एव भगवतो रुद्रस्य तमोगुणात्मकं संहारकार्यमवसीयते, सुतरामाकर्षणं राजसिकं विकर्षणं च तामसिकं सिद्धम् ॥ १०२ ॥

[ क्रमशः ]

पुस्तक समीक्षा—

# एकाङ्किसंस्कृतनवरत्नसुषमा

## ले०—डॉ० नारायण शास्त्री काङ्कर:

प्रकाशक—राजस्थान साहित्य अकादमी उदयपुरम् ।

डॉ० नारायणशास्त्री-काङ्करविरचिता, राजस्थानसाहित्यअकादमी (संगम) उदयपुरम्—द्वाराप्रकाशिता एकाङ्किसंस्कृतनवरत्नसुषमा स्वकीयां परमां शोभां बिभ्रती साहित्यिके जगति सम्प्रति विभाति ।

संस्कृतसाहित्येऽधुनातने युगे शास्त्रीयं तत्त्वं वहन्त: मानवमूल्यानि सन्दिशन्त: एकाङ्किन: क्वाचित्का: एव पत्रपत्रिकासु दृश्यन्ते तेषु प्रस्तुतस्य नवरत्नस्य रात्नार्थ्यम् वैलक्षण्यानुगुण्यम् च प्रव्यक्तं वर्त्तते ।

केषांचिदेकाङ्किनां साफल्यं त्वभिनेयतामभीक्ष्यैव निर्धारयितुं शक्यते । नाटकेषु क्लिष्टा भाषा, छन्दोयोजना: शास्त्रसरणेरनुसृतिश्च नाभिनेयतामतिशेरते ! विषय-भाव-भाषा-रचना शैल्यादि समन्वित: अभिनेयतागुण: एव सम्प्रति समीक्षकै: सामाजिकैश्चापेक्ष्यते । नाटकेषु एतद्दृष्ट्या सर्वेऽत्रसुग्रथिता एकाङ्किन: विद्यालयेषु पुस्तकालयेषु सांस्कृतिकसंगमेषु वा सम्यगभिनेतुं योग्या: सन्ति ।

ऐतिहासिकै: पौराणिकैरि तिवृत्तैस्सहैव सामाजिकै: काल्पनिकैश्चेतिवृत्तै: समलङ्कृता: केचित् स्वातन्त्र्ययज्ञाहुति धनिकधूर्तता प्रतिभा चमत्कारसदृशा एकाङ्किन: अभिनवां सामाजिकचेतनां साफल्येन समुद्घाटयन्ति !

कथावस्तु-कथोपकथन-पात्र-चरित्रचित्रण-भाषा-रचनाशैल्यादितात्त्विकतां पारिशेष्यात् संवहन्त: सर्वे एकाङ्किन: संस्कृतैकाङ्किपरम्परां पूरयन्त: प्रातिनिध्यंवहन्त: विराजन्ते ।

श्री काङ्करमहोदयानामेषा परमरमणीया कमनीया कृति: संस्कृतज्ञै: सामान्यै: अपश्चिमविपश्चिनै: विद्वद्भि: समीक्षकैश्च सुतरामभिनन्दनीयेति सूर्योदस्य विश्वास: । श्री काङ्करमहोदया राजस्थानसाहित्याकदमी निदेशकमहोदयाश्च शतश: सत्प्रयासार्थमभिनन्द्या: ।

कलापूर्ण मुद्रणसौन्दर्यं, ग्रन्थग्रथनम् कर्गलादिकवाह्यावरणं चाभ्यन्तरीणं रसरोचिष्णुतामेवार्चन्ति ।—[ सं० ]

पञ्जीकृत-संख्या—एल० आर० एन/५३

# सूर्योदयस्य नियमाः

**पत्र-संहिता**

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकनवकं वर्तते। धनादेश (मनोआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे २/७५ पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीन-प्रथमाङ्कतः (जनवरीअङ्कतः) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालय-तस्तदनागमनस्य निर्णय कृत्वैव १० दिनाङ्कानन्तरं वय सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय चिटिका (टिकट) प्राप्त्यनन्तरं परावर्तयितुं शक्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्ट लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

**विज्ञापन-शुल्कम्**

सूर्योदये सुरुचिपूर्णं विज्ञापन प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण-द्वितीय तृतीयपृष्ठयोः | १५०) | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी,**

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० श्री परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थल—आनन्दकानन प्रेस, सी-के० ३६/२०, वाराणसी।

श्रीभारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्

# सूर्योदयः

[ कर्ममीमांसादर्शनादेशाङ्कः ]

---

संरक्षिका

श्रीमती विद्यादेवीजी महोदया

प्रबन्ध सम्पादिका

श्रीमती एम० बी० पाइ

सम्पादकः

डॉ० परमहंस मिश्रः

सहसम्पादकौ

डॉ० कपिलदेव पाण्डेयः

श्री श्यामबिहारी त्रिपाठी

वार्षिकमूल्यम्–९ रूप्यकाणि

वर्ष : १९७६–७७

प्रत्यङ्कमूल्यम्–१ रूप्यकम्

अंक : विशेषांकः

# अनुक्रमः

# शुभाशंसनानि

## विदेश मंत्री : भारत सरकार

( मुहर )
भारत सरकार

विदेश मंत्री, भारत
MINISTER OF EXTERNAL AFFAIR
INDIA
७ जून, १९७७

प्रिय डॉ० मिश्र,

आपका दिनांक २४ मई १९७७ का पत्र प्राप्त हुआ। मुझे यह जानकर बड़ी प्रसन्नता हुई कि श्रीभारतधर्म-महामण्डल अपने मासिक मुखपत्र "सूर्योदय" का कर्ममीमांसा दर्शन विशेषांक प्रकाशित करने जा रहा है।

सूर्योदयके इस विशेषांककी सफलताकेलिये मेरी हार्दिक शुभकामनाएँ स्वीकार करें।

आपका
अटल बिहारी बाजपेयी

# राज्यपाल : उत्तरप्रदेश

GOVERNER
मुहर
UTTAR PRADESH

RAJ BHAWAN
LUCKNOW
मार्च १६, १९७७

मुझे हर्ष है कि 'सूर्योदय'का विशेषांक 'कर्मांक'के नामसे प्रकाशित होने जा रहा है।

प्रायः सभी धर्मोंमें कर्मका विशेष महत्त्व है। बहुतसे लोग तो कर्मको धर्मका पर्यायवाची भी कहते हैं। जहाँ रामचरितमानसमें गोस्वामी तुलसीदासजीने 'कर्मप्रधान विश्व रचि राखा' कहा है, वहाँ श्रीमद्भगवद्गीतामें भगवान् श्रीकृष्णका सन्देश है कि मनुष्यका अधिकार केवल कर्म करनेमें ही है—"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।"

मुझे विश्वास है कि आजके युगमें जहाँ नैतिक मूल्योंका पतन दिखायी देता है, सही कर्म अथवा कर्तव्य क्या है, इसको समझने और अनुकरण करनेसे मनुष्यका कल्याण हो सकता है और उसे वास्तविक शान्ति मिल सकती है।

विशेषांककी सफलताकेलिये मैं शुभकामनायें भेजता हूँ।

म० चेन्ना रेड्डी

सम्पादकः-संस्कृत प्रतिभा

Dr. V. Raghawan Madrass

२०–३–७७

सूर्योदयपत्रिकायाः कर्ममीमांसाविषयकः विशेषाङ्कः सम्पाद्य प्रकाशयिष्यत इति ज्ञात्वा प्रमोदामहे।

अस्य विशेषाङ्कस्य पत्रिकायाश्च अभिनन्दनानि निवेदयामः।

डॉ. वे. राघवः

सम्पादकः—संस्कृतप्रतिभा

---

श्रीभारतधर्म महामण्डलद्वारा प्रवर्तितं सूर्योदयनामकं मासिकं संस्कृतपत्रं न केवलं वाराणस्या अपितु समस्तस्य संस्कृतजगतः पुरातनेषु पत्रेष्वन्यतमं भारतप्रसिद्धं प्रतिष्ठितं च पत्रं वर्तते। बहूनां सुविख्यातमनीषिणां सम्पादनेन लब्धविशेषगौरवमिदं संस्कृतसमाजस्य स्नेहसम्मानभाजनतया सर्वत्र समधिगताऽधिकप्रसर आसीत्। परन्तु वर्षाकालस्य मेघमेदुरे गगनेऽदृश्यतां गतो रविरिव कतिपयमासैरप्रकाशतां गतः संस्कृतपत्रपाठकानां चिन्तायाः कारणमजायत।

प्रसन्नताया एष विषयो वर्तते यन्महामण्डलस्याऽधिकारिभिः स्वसंस्थाया गौरवं संस्कृतभाषाया हितं च विचिन्त्य न केवलमस्य पुनः प्रकाशनस्यैव प्रत्युत महत्त्वपूर्णविविधपठनीयसामग्रीसंवलितस्य कर्ममीमांसादर्शनविशेषाङ्कस्य प्रकाशनेन गतेषु मासेषु सञ्जातायास्त्रुटेरपि परिमार्जनस्य निश्चयो विहितः। एतदर्थं सर्वेऽधिकारिणो नितरां धन्यवादार्हाः। आशासे, स्वपरम्परानुरूपमेव पत्रमिदं पुनर्विना व्यवधानं सुरसरस्वतीसमाराधनं विधास्यतीति–

पत्रस्य पुरातनः प्रणयी—

—वासुदेव द्विवेदी

सार्वभौम संस्कृत प्रचार कार्यालयः

हौजकटोरा, वाराणसी

॥ श्री विश्वनाथो जयति ॥

अंकुण्ठं सर्वकार्येषु धर्मकार्यार्थमुद्यतम् ।
वैकुण्ठस्य हि यद्रूपं तस्मै कार्यात्मने नमः ॥

# श्रीभारतधर्म-महामण्डल

सभी हिन्दु धर्माचार्यों एवं सभी हिन्दु समाजों द्वारा स्वीकृत
सनातनधर्मियोंकी अखिल भारतीय प्राचीनतम विराट् धर्ममहासभा
स्थापित सन् १९०१

श्रीभारतधर्ममहामण्डलशुभाभिधानाया विराड्धर्मसभायाः मुखपत्रम् सूर्योदयः सांस्कृतिकेषु धार्मिकेषु साहित्यिकेषु च क्षेत्रेषु सुरभारत्याः प्रभां शश्वद् विभाषयिषुः सततं ज्ञानप्रकाशप्रकर्षराशिं चिरात् वितरति । त्रैमासिकस्त्रैभाषिकश्चायं सम्प्रति केवलया गीर्वाणवाण्या एव प्रातिभामाभां वितन्वन् विभाति ।

साम्प्रतिकेन कर्ममीमांसादर्शनविशेषाङ्केन लोके कर्मणः कमनीयता विश्लिष्टा विवृता च भविष्यतीति भगवन्तं गुरुदेवमहाप्रभुं श्रीमज्ज्ञानानन्दस्वामिनं सूर्योदयसंस्थापकम् स्मरामि, आशासे चोत्तरोत्तरमुत्कर्षायेति शम् ।

—विद्यादेवी
मंत्री

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

[ कर्ममीमांसादर्शनविशेषाङ्कः ]

५३ वर्ष ] वाराणसी, चैत्र २०३४ वै० : मार्च १९७७ ई० [ पूर्णसंख्या : ५१८

## सूर्य आत्मा जगतस्तस्थुषश्च !

चित्रं देवानामुदगादनीकं
चक्षुर्मित्रस्य वरुणस्याग्नेः।
आ प्रा द्यावापृथिवी अन्तरिक्षं
सूर्य आत्मा जगतस्तस्थुषश्च॥
अद्या देवा उदिता सूर्यस्य
निरंहस पिपृता निरवद्यात्।
तन्नो मित्रो वरुणो मामहन्ता-
मदितिः सिन्धुः पृथिवी उत द्यौः॥

ऋ. मं. १ सुक्त ११५.१,६

दीव्यन्तीनां दीधितीनां दिव्यशक्तिसम्पन्नानां देवानां वा समूहरूपम्, मित्रस्य वरुणस्य अग्नेश्च प्रकाशकम् विस्मयान्वितमिदं मार्त्तण्डमण्डलम् उदयाचलं प्राप्तमास्ते। उदयं प्राप्य च दिवं पृथिवीम् अन्तरिक्षं च स्वकीयेन तेजसा समन्तात्संपूरयन्विभ्राजते। अयम् एतन्मण्डलान्तर्वर्त्ती सूर्यः स्थावरजङ्गमात्मकस्य विश्वस्य आत्मा स्वरूपभूत एव।

अयि वृन्दारकवरेण्याः, करुणाः किरणावलयः, विद्योतिताः विद्वांसः! समुदितेऽस्मिन् विश्वप्रकाशके विभावसौ सततं कुत्सितैः कलमषैः याजकान् अस्मान् पालयत। एवं मित्रः वरुणः अदितिः सिन्धुः पृथिवी द्यौश्चैते षड्देवाः सर्वान् अस्मान् यजनशीलान् रक्षन्तु।

# श्रीमहर्षिज्ञानानन्दचरितं महाकाव्यम्

—स्वर्गीयाः श्रीविन्ध्येश्वरीप्रसाद शास्त्रिणः—

( द्वाविंशे सर्गे )

परिशुष्कमथेरत्तृणं कुरुते भस्म यथाग्निरुच्छिखः ।
शिवमन्त्रबलेन दह्यते निखिलः प्राणभृतां कृतेश्चयः ॥४१॥

महतामिह पापिनां स्मृता विविधा भैरवयातना अपि ।
प्रभवन्ति न ता नृणां मृतौ किल केदारभुवीति निर्णयः ॥४२॥

प्रकृतिप्रभवा हविर्भुजो नियता शक्तिरियं हि दाहिका ।
सुविमोचनशक्तिरद्भुता नग्नरस्यास्ति पिनाकधारिणः ॥४३॥

पतिता जलबिन्दवो यथा शुचिशुक्तौ वरवारिवर्षिणः ।
विभवन्ति तथात्र संस्थिता भुवि मुक्ता अतिनिर्मला ध्रुवम् ॥४४॥

मृडधामनि चात्र निश्चितम् नहि सूच्यग्रसमं स्थलं क्वचित् ।
स्ववपुस्त्यजता जनुष्मता निजमुक्तिर्न च यत्र लभ्यते ॥४५॥

श्वपचोऽपि च यत्र वज्रिणं भुवि चिन्तामणिमश्मखण्डकः ।
अमृतं च जलं विविन्दति गुरुता तस्य वचः परा ध्रुवम् ॥४६॥

सकलं त्ववबुध्य मेधया श्रुतिविज्ञानमिदं महर्षिणा ।
हरसाक्षिकमुक्तिधामनि त्विह विन्यास इवार्पितं वपुः ॥४७॥

ऋषिरेव ततो दिनात्परं निजसंसेवितधर्मसद्मनि ।
सुविविक्ततमेऽत्र शारदाऽऽह्वयके विश्रुतपुस्तकालये ॥४८॥

निवसन् रहसि स्थितः सदा परमे ब्रह्मणि तन्मयो भवन् ।
विषवद् विषयान् परित्यजन् परितस्थौ सततं समाधिभृत् ॥४९॥

निजजीवनलक्ष्यहेतुके रुचिरे शास्त्रविकासकर्मणि ।
निरतो बहुभिः सुधीश्वरैरयमासीत् परितो निषेवितः ॥५०॥

[क्रमशः]

## सम्पादकीयम्--

सूर्योदयः सम्प्रति सर्गसत्रे प्रकाशयन् प्राज्यपरप्रकाशम्।
विकासयन् विश्वहृदुत्पलानि भूयाद् भवे वैभवसंभवाय॥

विगतसार्द्धवत्सरसमयतामिस्रान्धतमोऽपसार्य सम्प्रति स्वत एव विश्वस्य मालिन्यं समूलमुन्मूलयन् समानुन्मिषितव्यान् समुन्मेषयन्, ह्लेपयन्नहितावहान्, ग्लापयन् खलान्, उत्थापयन् स्खलितान्, विकासयन्नविकसितान्, उन्मोचयन् कोषकाराकीलितान् चञ्चरीकान्, विकीर्य च दिक्षु सौरभसौभाग्यसामानाधिकरण्यैकरस्यं, दोषादोषव्युदासदक्षतां सक्षमतया प्रतिक्षणं वैलक्षण्यात् शिक्षयन्, मरीचिनिचयसंचरणचारुताचमत्कारा‌चरितचितिचर्यां संचालयंश्च देदीप्यते साम्प्रतममन्दानन्दसंदोहसम्पदां संविधायकः सूर्योदयः।

परमामोदमावहन्तः सन्तः सुविपश्चितो विद्वान्सः विदन्त्येव भवन्तः यत् श्री भारतधर्ममहामण्डलशुभाभिधानसंवलितायाः वैराज्यविभूषितायाः विश्वधारकधर्मधिषणासंवर्द्धिकायाः भारतभारतीविभाभावितायाः संस्थायाः मुखपत्रं सूर्योदयः।

किमान्तरिकान्यन्तरालान्तरायभूतानि घनतामिस्रनिमित्तानि आसन् एतावति विलम्बे इति चिन्तयैव सम्प्रत्यलम्। एतावदेवावधेयं भवद्भिः दयार्द्रान्तःकरणैर्विद्वद्भिः, कृपालुभिर्ग्राहकैरध्येतृभिः सहृदयैर्यत् उदयति मिहिरे सुमनांसि सम्यग्विकसन्त्येव सौभाग्यस्वाभाव्यात्। वैयाकुल्यं च विगलति सर्वेषां प्रकाशराशिपरिपोषितप्रत्यूषपरायणानां सुहृदामिति क्षमायाचनपुरःसरं संस्तौमि भविष्यति सूर्योदयं प्रति सूर्योदयपरिवारं प्रति सहजसौहार्दसंवर्द्धनाय, स्नेहत आयतौ सत्पथसंदर्शनाय विश्वमानससंप्रीणनाय च।

विशेषाङ्कोऽयं तत्रभवतां करारविन्देषु समर्पितः साम्प्रतं शोभतेतमाम्, विगतसार्द्धवत्सरसंभवाभावसंभरणाय समुपबृंहितसंभारभूषाविभूषितः,

अयं सुन्दरः सुधियां धियां समाकर्षकः सुमनोहरः यादृशस्तादृशो वा प्रतिभावतां भवताम् अन्तःकरणारविन्दानां समुल्लिलासयिषया प्रवर्त्तमानः परमामोदावह एव भविष्यतीत्याशया विश्वासेन च सुतरां संतुष्यन् सुखं श्वसिति सूर्योदयपरिवारः।

सुरभारतीभावानुभावविभावसामरस्यसम्पदः सम्यक्समृद्धये त्रिपंचाशद्वर्षतो ह्यविरतं प्रयतमानः स्वकर्त्तव्यमेव प्राधान्येन विदधन् सम्प्रत्यपि कर्मण एव वैशिष्ट्यं विश्लिष्यन् कर्ममीमांसादर्शनमेव विशेषाङ्कत्वेन प्रकाशयन्, चिरात् चिरन्तन-चिन्तन-चमत्कृति-चेतन्य चारुचरित्राणां विद्वद्वरेण्यानां वैचारिके वियति कर्मकलापकल्पलतिकातपमातन्वानश्चकास्ति सूर्योदयः। कर्मणोऽपलापं तु केऽपि कर्त्तुं न क्षमन्ते। सर्वे मतवादिनः कर्मशक्तिमत्तां स्वभावतः स्वीकुर्वन्ति। श्रुतेः कर्मोपासनाज्ञानस्वरूपाणां काण्डत्रयाणां पल्लवनं, तत्त्वरहस्यसिद्धान्तसमुपबृंहणं च सम्यक् शास्त्रेषु कृतं वर्त्तते। वस्तुतः एतेषां श्रुतिविश्रुतकाण्डत्रयाणां मीमांसाप्रसङ्गे कर्ममीमांसा-उपासनामीमांसा-ज्ञान ( ब्रह्म ) मीमांसा स्वरूपाणां त्रयाणां त्रिधा दर्शनपद्धतिः वेदविद्याविशेषज्ञैः शास्त्रकारैः स्वीकृता। तत्सतत्त्वमेव मीमांसादर्शनसिद्धान्तानां—कर्मकाण्डस्य कृते कर्ममीमांसादर्शनस्य, उपासनाकाण्डस्य कृते मध्यमीमांसापरनामधेयस्य दैवीमीमांसादर्शनस्य, ज्ञानकाण्डस्य च कृते ब्रह्ममीमांसोत्तरमीमांसादर्शनशुभाभिधेयस्य विश्रुतस्य वेदान्तदर्शनस्य चेति त्रयाणां दर्शनानां प्रवर्त्तनं कृतम्।

इत्थं त्रयाणां मीमांसादर्शनानां तत्त्वं मीमांसितं प्राक्तनैः मनीषिभिः। अधुनातने विविधविज्ञानवैदुष्यप्रभावभाविते, विषमविचारविचिकित्सासंचारचमत्कृते संस्कृतसिद्धान्तसंशीतिदूषिते युगे संस्कृतिसंक्रान्तिसंक्रान्ते समये कथंकारं मीमांसादर्शनत्रयस्थाने जैमिनीयं मीमांसोत्तरार्द्धं ब्रह्ममीमांसारूपं वेदान्तदर्शनमिति मीमांसादर्शनद्वयमेव समुपलभ्यतेतमामिति पारेप्रज्ञमेव प्रतिभाति यदेतस्य किं दुर्निमित्तमिति कश्चासीद्धेतुरिति।

एवम् कर्ममीमांसादर्शनपूर्वार्द्धम् अथ च उपासनामीमांसारूपदैवी-

मीमांसादर्शनमित्येतद्दर्शनद्वयमेव कुटिलकालप्रभावात् विलुप्तमित्यनायासेनैवानुमीयते। सर्वकर्तृत्वसम्पन्नस्य सर्वज्ञस्य पूर्णत्वनित्यत्वसर्वव्यापकत्वसंवलितस्य सर्वतंत्रस्वतंत्रस्य परमेश्वरस्य समीहायामूहापोहस्य नास्त्येव निश्चप्रचं निर्वाहः कथमपीति सिद्धान्तः। सर्वकर्तृत्वसमर्थस्य शक्तिमतः सामर्थ्येन, जगदम्बिकायाः परमानुग्रहेण च संघटितुमशक्यानां घटनानां संघटनं सुकरमेवेति साक्षात् शिव इव परिदृश्यमानेन परमकारुणिकेन दर्शनसंभूतिभूषितेन अनन्तश्रीविभूषितेन मेधाविमूर्धन्येन महाप्रभुवर्येण महर्षिज्ञानानन्दमहाराजेन यतिवरेण परमहंसेन समाधिसुखसामरस्यपीयूषसरोवरसरोजरससमुद्रेण तयोः विलुप्तयोः दर्शनयोः समेषां सूत्राणां च साक्षात्कारः सुखमकारि।

भारतीयैः मनीषिभिः ज्ञानदा-सन्यासदा-लीलोन्मुक्तिः-योगदा-सत्पदा-आनन्दपदा-परात्परानामधेयानां सप्तानां ज्ञानभूमीनां विशदं वर्णनं कृतं वर्त्तते। तत्राद्यानां चतसृणां ज्ञानभूमीनां क्रमेण न्यायवैशेषिकसांख्ययोगाख्यानि चत्वारि दर्शनानि भवन्ति। तिसृणामन्त्यानां सत्पदाऽऽनन्दपदा-परात्परा-ज्ञानभूमीनां क्रमेण त्रयाणां दर्शनानामस्तित्वमवश्यंभावीति तेन महर्षिणा सुचिरम् अचिन्ति अचेति च चितिचर्वणचमत्कृतिरुचिरां रचनाचातुरीम्। साक्षात् मन्त्रद्रष्टृणाम् ऋषीणामिव तैरदर्शि च सत्पदाज्ञानभूमि-सम्बद्धदर्शनसूत्रजालम्, आनन्दप्रदा ज्ञानभूमिसम्बद्धदेवीमीमांसादर्शनसूत्रसमुदायम्। प्रादुरभवच्च जगति जेगीयमानं प्रातिभं परिदर्शनं वाङ्मयवपुः दर्शनद्वयम्। एतेन कर्ममीमांसादर्शनम् महर्षिभरद्वाजादुपलब्धात् कर्ममीमांसापूर्वार्द्धात्, जैमिनिप्रणीतकर्ममीमांसोत्तरार्द्धात् द्विधा विभज्यमानं परिपूर्णतामगात्। अस्य दर्शनस्य आविष्कारानन्तरम् उपासनादर्शनरूपदेवीमीमांसादर्शनस्यापि समुद्धारः समपद्यत।

सम्प्रति प्राकाश्यं नीयमाने कर्ममीमांसादर्शनविशेषाङ्के वर्णाश्रमधर्मसिद्धान्तसमीक्षणम्, आर्यसमुदाचाराचारविचारणम् धर्माधर्मयोः पार्थक्यम्, धर्मस्य गाम्भीर्यम् तात्त्विकता च भृशमुपवर्णिता वर्त्तते। विशेषतः धर्म-

पादे धर्मस्वरूपाणां हेयोपादेयसामान्यविशेषापदसाधारणनारीपुरुष धर्मतपोयज्ञदानादीनां साङ्गोपाङ्गं वर्णनमस्ति। द्वितीये च संस्कार-पादे स्वाभाविकास्वाभाविकसंस्काराः, षोडशसंस्काररहस्यानि शौचा-शौचादिविज्ञानानि कोशवर्णजातिजन्मान्तरकर्मविपाकतत्वानि च विशदं वर्णितान्यधुना अपेक्षितानि सन्ति।

महर्षिभरद्वाजतः समाधिलब्धस्यैतस्य सूत्रजालस्य कियन्महत्त्वं सम्प्रतीति विद्वांस एव निर्णेष्यन्ति। साम्प्रतिके कर्माकर्मविकर्मरहस्य-ज्ञानतः विश्रब्धं वंचितस्य जगतः केवलं कल्याणाय इदमेव शास्त्रम्, इदमेव दर्शनम् इति मत्वा कर्मसरणिसंस्कारपरिष्कारकामनया कर्म-मीमांसादर्शनविशेषाङ्कोयम् प्रकाश्यते समाशास्यते च सुतरामस्माभिः सुस्वागतमेतस्य विशेषाङ्कस्येति।

चतुर्विंशतिफार्मसमृद्धेऽस्मिन्नेकस्मिन्नेव विशेषाङ्के षष्ठसप्तत्युत्तरोन-विंशवर्षीयस्य (१९७६) सूर्योदयस्य विनियोजनं भविता। आगामिनि च विशेषाङ्कपरिशिष्टरूपे द्वादशफार्ममात्रसंभाव्यमानेऽङ्के भविष्यति सर्वं सुखावहं भविष्यतीति शम्।

**वचस्यन्यत् कर्मण्यन्यत्—**

सर्वे समकालीनाः राजेनतारः बहुधा वक्तृतां ददति, वदन्ति सर्वतः संस्कृतमेव भारतीयसंस्कृतेः सुषुम्ना, संस्कृतभाषैव विश्वभाषाप्रसूः, संस्कृते एव समग्राः प्राज्याः ज्ञानराशयः प्रतिष्ठिताः, तदज्ञातारश्च महर्षि-कल्पाः समर्चनीया एव सर्वे! अन्ताराष्ट्रियशिक्षाक्षेत्रे तु संस्कृतं स्वानु-रूपमेव समाद्रियते विद्वद्भिः विश्वविद्यालयैश्च।

किन्तु किं वक्तुं योग्यं भारतीयं साम्प्रतिकं शासनम्! आगामिषु सत्रेषु संचिचालयिषया प्रकाशमाने शिक्षाविधिसबन्धिनि केन्द्रशासनसंस्कृत-बहिष्कारविज्ञप्तिविषये? इश्राइल देशे हिब्रू परिचालयिष्यते, तुर्की प्रदेशे तुर्की परिचालयिष्यते आर्यनरूसजापानचीनादिषु च तत्तद्देशीयाः भाषाः परिचालयितुं शक्यन्ते किन्तु एतद्देशीयानां नेतृणां चरित्रे किं वैचित्र्यम् आंग्लरारोपितं यत्तैः विश्वभाषाप्रसूः संस्कृतम्, समस्तज्ञान-

विज्ञानागारवाङ्मयमंडितं संस्कृतम्, आंग्लभाषास्थाने न परिचालयितु-मेव सन्नद्धाः दृश्यन्ते !

देशेऽस्मिन् आंग्लभाषाध्ययनाध्यापनं किमर्थकम् इति पृच्छामि स्वेच्छम् ! भारतराष्ट्रसुकुमारमतयः किशोराः बाध्यन्ते आंग्लभाषा-ध्ययनाय ! कथमेतत् ? तत्स्थाने केवलं संस्कृतमेव चेत् स्थाप्येत ! सुतरां समृद्धिः सम्पद्येत साहित्यस्य, संस्कृतेश्च, सम्यक् ज्ञानार्जनेन सारल्यं च स्यात् । एतदतिरिक्तम् भारत एवोत्तरदक्षिणभेदावविभाषयि-षापि समाप्येत ! औदोच्या अवाच्याश्चविपश्चितः एकचित्तीभूय संस्कृतम् चेष्यन्ति ! अनेकेषां विषमसमस्यानां समाधानं च संभाव्येत ! आह्वयति सूर्योदयः शासननीतिसंचालकान् वारस्वारमात्मनिरी-क्षणार्थम् ! स्वात्मविस्मरणम् एव मृत्युः । स्वात्मानं, स्वात्मसत्तां स्वात्म-तत्त्वं च समीक्षमाणानां विद्वद्वरेण्यानामियं भणितिः-'भाषा जीवनसंहितेति' । सत्यमस्माकं संहिता इवैव भविष्यतीति ! अयं देशः कः ? क्वेमे वयं के वा वयं देशवासिनः ? धमनीषु शौर्यसम्पन्नानाम् महामहिमवताम् आर्याणां रक्तसंचारः सम्प्रत्यपि पूर्ववदेव ! कथं न चेतना पूर्वजपुण्यं चिकामयिषते ? हं हो भारतीयाः साम्प्रतिकाः धिषणाधौरेयाः विचारयन्तु भवन्तः कथं न आंग्लभाषास्थाने संस्कृतं राष्ट्रभाषा भविष्यति ?

**शासनस्य त्रिभाषानीतिः—**

केन्द्रसर्वकारेण शासनेन प्रवर्त्तिता शिक्षानीतिः ( १०+२+३ ) अङ्कप्रकेतसंकेतिता सम्प्रति शिरोव्यथेव सुधियां संस्कृतभाषाभविष्य-विषये चिराच्चिन्तितानां सचेतसां संजाता वर्तते । सा जुलाई १९७७ वर्षतं एव प्रारप्स्यमानाप्यस्ति । किं भविष्यति संस्कृतस्य ? इति गभीरतयानुसंधेयमास्ते ।

तथा शिक्षानीत्यनुसारं ( १–५ ) कक्षासु मातृभाषायाः, ( ६–८ ) कक्षासु मातृभाषया सह स्वदेशसंस्कृतिसंवाहनेऽसमर्थायाः हिन्दीभाषायाः वैदेशिकवैधर्म्यधुरीणायाः आंग्लभाषायाश्च अथवा आंग्ल्या सह हिन्दी भाषायाः तथा ( ९–१२ ) पार्यन्तिकासु कक्षासु काचित्क्षेत्रीयभाषास्वन्य-

तमायाः स्वीकरणं संवलिष्यति। तत्रापि दैनन्दिनपठनपाठनसमयावधिषु निर्धारितासु घंटिकासु प्रतिसप्ताहं प्रथमाया भाषायाः षट्, द्वितीयायाः चतस्रः तृतीयायाश्च कृते केवलं द्वे एवेति निर्धारितक्रमतया स्वीकरणेन कापि मातृभाषा, द्वितीया हिन्दीभाषा अन्या वा विभाषाः, तृतीया चाँग्लभाषा प्राधान्येन प्रचलिताः भवेयुः ? निःसरतु संस्कृतं नाम संस्कृतिसंवाहकम् तत्त्वम्-इति कौटिल्यकलितशेमुषीकैः कैश्चित् निश्चप्रचम् अक्लेशि भारतीसंस्कृतभारती-भारतीयसंस्कृतिसमर्थकानां सुमनसां मानसम्।

एकतस्तु जीवनवृत्तिशासनमेवासु संस्कृतज्ञानां समुपेक्षणं प्रभूततया प्रचलित एव द्वितीयतः भाषोपर्यव सम्प्रति संप्रहर्त्तुमेते समुपनद्धाः। किं करणीयं भविष्यत्यस्मिन् विषये इत्यस्माकं एतन्निवेदनम् यत् साम्प्रतिकशिक्षानीतिशतघ्नोमुखं विपरीतायां दिशि सपदि पराविवर्त्तिषतया प्रवृत्ताः कटिबद्धाः विद्वांसः भवेयुः, राष्ट्रहितदृष्टिपुष्ट्य इति शम्।

× × ×

## श्रेयःश्रीमदाशीर्वचनम्

[ श्री भारतधर्ममहामण्डलस्य पूर्णकुम्भमहाधिवेशन सम्बद्धं साम्यर्थनं समाहूतानां ज्यतिष्पीठाधीश्वराणाम् अनन्तश्रीविभूषितानां शङ्कराचार्यवरेण्यानां स्वनामधन्यानां स्वामिनां स्वरूपानन्दशुभाभिधेयानां सरस्वती शुभ्रोपाधिविभ्राजितानां महाभागानां साभाध्यक्ष्ये—

प्रारप्स्यमानेऽस्मिन् महाधिवेशने प्रथमतः वैदिकपौराणिकमङ्गलाचारेण, महाकुम्भप्रभाभासाविभाव्यमानायाः भुवः वायुमण्डलं पौनःपुन्येन प्रथमतःपावनीकृतम्। ततः कुम्भाधिवेशनकार्यक्रमसम्पादकानां विद्वद्वरेण्यानां श्रीमतां डॉ० परमहंसमिश्रमहोदयानां स्वागतसम्भाषणे श्रोतृभिः श्रेयः—सुखावहा शङ्कराचार्यवर्यप्रशस्यप्रशस्तिः पारिशेष्यतः आकर्णपूरं पेयीकृता। श्रोतारः समुत्सुका आसन् श्रेयःस्वरूपाणां साक्षात् सद्धर्मधौरेयाणां प्रत्यक्षपारमैश्वर्यप्रतीकाणां परमप्रज्ञावतां ज्योतिष्पीठाधीश्वराणां मुखारविन्दात् निष्यन्दमानपीयूषसारसर्वस्वरसान्वितम् आचामितुम्।

श्रीभारतधर्ममहामण्डलसंचालिकानां परमतपस्विनीनां श्रद्धास्पद-पादारविन्दानां श्रीमतीविद्यादेवीजीमहोदयानां, समेषां महामण्डल-कार्यकर्तृणाम् अपरेषां च श्रोतॄणां सुमनांसि संविकासयन् ब्रह्मचारिमुखार-विन्दप्रवर्त्तितविरुदव्याख्यानपुरःसरं प्रारम्भि च तैः स्वकीयं भगवद्-भावभास्वरं धर्मधुनीधाराधारणाधुरीणं शास्त्रसिद्धान्तस्वारस्यसम-न्वितम् आशीर्वचनम् श्रीमद्भिः साक्षात् शंकर इव विभ्राजमानैः शङ्कराचार्यशिरोमणिभिः।

धर्मस्य जयः, अधर्मस्य क्षयः, प्राणिषु सद्भावः, विश्वस्य श्रेयः-साधनम्, हरहरमहादेवेति सतारस्वरं समुद्घोषं कारयञ्च सम्यक् समभिव्याहरन् तत्रभवन्तः शुभाशिषः]

परमादरणीयाः विद्यादेवी जी महोदयाः, मान्याः विद्वांसः श्रीभारत धर्ममहामण्डलकार्यकर्त्तारः श्रद्धाभरितान्तःकरणाः सज्जनाः तीर्थ-यात्रिणः श्रोतारः! देव्यश्च! अधुना अत्रभवन्तः वयं च परमपावन-पुण्यप्रदानाम् तीर्थराजेश्वराणामङ्के सधर्मधिषणं समागताः स्मः। इयं लीलास्थली त्रिस्रोतस्विनीनां ललितलहरिकाणाम्। इयं पुण्यस्थली ऋषीणाम्, इयम् यज्ञस्थली सहस्रसहस्राश्वमेधमखदीक्षितानां सम्राजां, धर्मधुरंधराणामध्वर्यूणां च इयं वारुणीया धरणी! अनादिकालत एव समादृता ऋषिवर्यैः, तपःस्वाध्यायनिरतैः मनीषिभिः विद्वद्भिः विचार-कैश्च। अत्र साधकाः साध्यं साधयित्वा सिद्धाः संजाताः, सामान्याश्चे-तरे तपस्विनः सादरं सुबहुमानिताः महात्मानः अभवन्! विष्णु-पदजा, ब्रह्मकमण्डलुसंस्थितसुधासारसर्वस्वा चन्द्रशेखरशिरःप्रदेश-विभूषणा भगवती भागीरथी अत्र प्रवहमाना विराजते! कलिन्दतनया कालिन्दी अत्र चकास्ति। अदृश्यप्रवाहवाहिनी सरस्वती अत्र समन्विता! त्रिस्रोतसः सामरस्येन त्रैलोक्यमङ्गलमादधाना महनीयतामंडिता त्रिवेणी सर्वदा अत्र शाश्वतिकीं शान्तिं तनोति! अत्र समागत्य सर्वे स्वात्मनः धन्यान् विदधति। सनातनसत्यसत्संगसिद्धान्तसुधासवसमास्वादनेन शोधितशुद्धान्तःकरणाः जनाः संस्कृतसंस्कृतिसंस्कारसम्पन्नाः भवन्ति।

भविष्योत्कर्षसाफल्याय च प्रेरणां लभन्ते। उपदेशश्रवणेन दानेन यज्ञेन च सर्वे आत्मन आराध्यं संराधयन्ति ।

एतादृक्षाणामन्तःकरणेषु पुण्यस्य श्रद्धायाः भक्तेश्च चामत्कारिकः संचारो बोभवीति ।

अत्र श्री भारतधर्ममहामण्डलशुभाभिधेयस्य देशविश्रुतधार्मिक-संगठनस्य संस्थायाश्च महाधिवेशने वयम् एकत्रसम्मिलिताः स्मः। भौतिक चाकचिक्यकंचुकितलोचना भारतीया जनता यदा धर्मपराङ्मुखेव संजाता आसीत्, सनातनसिद्धान्तान् विस्मृत्य विभ्रमभ्रमिषु भ्रान्तेव परिदृश्यमाना कलिकल्मषकलङ्कपङ्कपरिमग्नेव सीदतिस्म, तदा तदानीं-तनानाम् आगामिनां च पुरुषपरम्पराणां कल्याणकामनया करुणया च निर्णायि अकारणं कारुणिकैः कर्मण्यैः श्रीशैः ज्ञानानन्दमहर्षिभिः सनातनसिद्धान्तानां शास्त्राणां च जनमनःसु सुखं समवतरणाय, श्री भारतधर्ममहामण्डलसंस्थायाः संस्थापनं प्रतिष्ठापनं च तैः सम्यगकारि। ते महाराजप्रभवः परमतपस्विनः त्यागिनः आसन्! समितिनिर्माणा-त्मके बहुश्रमसम्पत्साध्ये सार्वजनिकेऽस्मिन् कार्ये तेषां समीहा प्रवृत्तिर्वा केवलं सनातनधर्मरक्षणार्थमेव जागरिता। महापुरुषाः ध्रुवसमारम्भाः भवन्तीति साधनस्वल्पतायामपि तैः महात्मभिः सम्पादितं धर्मस्य संरक्षणम् अनन्ययेव अनयैव संस्थया! संस्थाया अस्याः अतीतं गौरव स्मारं स्मारं शङ्कराचार्य्यैः भृशं व्याहृतम् यत् विगतसप्ततिवर्षान्तराल-कालावधौ संव्यधायि समाजस्य पारेमूल्यं सेवनम्। सम्प्रत्यपि ससम्भारं ससमारोहं ससमारम्भं भवत्येव महती सेवेति प्रत्यक्षमेव सर्वेषां समुल्ल-सति दृष्टान्तः। अकारणकरुणावरुणालयायाः जगदम्बिकायाः पराम्बायाः परमाराधनं सप्तशतीसहस्रमखमाध्यमेनात्र सम्पद्यत एव! शास्त्राणां प्रकाशनं काशीतः सततं भवत्येव, अनेकेषां संस्थानां धर्मप्रचारकार्याणां च सचालनं यथासमयं यथाशक्ति परिचलत्येवेति संतोषस्य विषयः साम्प्रतं तेषां स्वनामधन्यानां महर्षिणां धर्माधिकारिणो शिष्या श्रीमती विद्यादेवीजी महोदया वार्द्धक्येऽपि शीतादिसहिष्णुतयाऽत्र विराजमाना

संस्थां सम्यक् संचालयति। मध्येसभं तदेव देव्या स्त्रीणां पापयोनित्वे व्याहृते श्रीमन्तः शङ्कराचार्याः समवोचन्–यन्मैवम्–श्रुतौ 'मातृदेवो भव' इति भणितिः विभात्येव। सप्तशती व्याहरति सर्वासां स्त्रीणां मातृत्वम्। मातृरूपेणैव पराम्बा सर्वत्र विभ्राजते। गौरवान्वित महिममयं च मातुः स्थान शश्वदस्ति भविता च भविष्यतीति! शरीरदृष्ट्या इयमबला तन्वी च किन्तु धार्मिकदृष्ट्या चेयं समर्चनीयचरणारविन्दा पराम्बा-रूपा! भक्तौ श्रद्धायां धर्माचरणे च योषितः पुरुषेभ्य: पुरतः विद्यमाना: विराजन्ते! तुलसीकृतरामचरितमानसस्य–'अनुजवधूभगिनी सुतनारी'ति चतुष्पदीप्रसङ्गं स्मारयन् ते समाचष्टन्त यत् सर्वदैव योषितः पुरुषान् नियम्य धर्माचरणार्थं संप्रेरितवत्य:। साक्षात् भगवतीरूपा अत्र भवती विद्यादेवीजी महोदया यत्करोति धर्मधुरीणानां कृतेऽपि तदुदाहर्तुं योग्यमेव।

ज्योतिष्पीठस्य स्थापनाप्रसङ्गे शंकराचार्याः अवोचन्-बौद्धयुगे नास्तिकताडम्बरविडम्बिते युगे, तांत्रिकसाधनाविभ्रमविचिकित्सासमन्विते समये राज्ञः सुधन्वनः प्रासादाग्रे—

किं करोमि क्व गच्छामि क: वेदानुद्धरिष्यति इति श्रावं श्रावं

मा शोचः राजपुत्रि! त्वं······उद्धरिष्यामि रूपात्मव्यथाप्रसङ्गे ते भगवतः आद्यशङ्कराचार्यस्यैतिह्यं समुदाचारं समुदाहरन् चतुर्दिक्षु मठस्थापनम् तत्प्रसङ्गे ज्योतिष्पीठस्थापनम्, भगवतः प्रस्थानत्रयी-भाष्यनिर्माणादिकं निखिलं तैः व्यश्लेषि। तोटकाचार्यं सनामोल्लेखं व्याहृत्य तैरुक्तं यत् तोटकाचार्यानन्तरं पीठेऽस्मिन् चत्वारिंशदाचार्याः समतिष्ठन्। अन्ततः श्रीरामकृष्णाचार्यानन्तरं केऽपि उत्तराखण्डमधिष्ठाय स्थातुं न समर्थाः। परिणामतः सार्द्धशतवर्ष (१५०) पर्यन्तं पीठोऽयमुच्छिन्नो जातः।

एवम् अतिमात्रमुपेक्षितस्य, देशस्य मानचित्राच्चिरं विस्मृतौ प्रक्षिप्तस्य ज्योतिष्पीठस्य समुद्धरणेऽपि एतद्देशीयाः कथं न प्रायतन्त एतावत्कालपर्यन्तमिति पारेतर्कमेव प्रतिभाति! सौभाग्यात् भारतभुवः,

धार्मिकस्य जगतः, शङ्कराचार्याणाम् इवैव धर्मोद्धारकाणां स्वनामधन्यानां महात्मनां परमहंसानां श्रीमतां ज्ञानानन्दस्वामिनां प्रादुर्भावोऽभवत्। एतद्विषये तेषामेव मतिरजायत। ज्योतिष्पीठं समुद्धर्तुं तैः महाप्राणैः महात्मभिः भृशं प्रयतितम्। भीष्मप्रयाससाध्यसम्पदः सानन्दमुपभोगं तु वयं संप्रति कुर्वन्त एव स्मः किन्तु तादानीतनीं तेषां महीयसीं विक्रान्तिं स्मारं स्मारं, तेषां लोमहर्षणं पीठाविष्करणलालसालौल्यं श्रावं श्रावं श्रद्धया वयम् सौहार्दसुमनांजलिभिः अन्तरेव तर्पयामः। न केवलं तैः महर्षिभिः पीठस्य समुद्धार एव कृतः, तत्रत्या सुव्यवस्थाऽपि तैरकारि, पूर्णागिरिमन्दिरं च स्वयम् निरमायि ! एते समुद्धारकाः महर्षयः जानन्ति अत्रभवन्तः त एव आसन् श्रीभारतधर्ममहामण्डलसंस्थापकाः तादानींतनाः संचालकाः श्रीज्ञानानन्दस्वामिमहाभागाः। तेषामेवानुग्रहेण ज्योतिष्पीठ-परम्परा पुनः परिचालिता, प्राचलच्च शङ्कराचार्यप्रतिष्ठापरिपाटी। अनन्तश्रीविभूषिताः ब्रह्मानन्दजीमहोदयाः प्रथमतः तत्र प्रतिष्ठापिताः। अद्यापि एतस्याः श्रीभारतधर्ममहामण्डलसंस्थायाः आधिपत्यं सर्वे आमनन्ति शासनमपि सोद्घोषं स्वीकरोति।

तस्या एव संस्थायाः इदम् महाधिवेशनम्। अनया जातेः राष्ट्रस्य देशस्य जनतायाश्च सम्यक् सेवा सम्पद्यते एव। श्रीमती विद्यादेवीजी महोदया अत्रभवतां पुरतः प्रत्यक्षं विराजमाना सर्वाणि धर्मकार्याणि सम्यक् सम्पादयति। श्रीभारतधर्ममहामण्डसंस्कृतमुखपत्रं सूर्योदयः काशीप्रधानकार्यालयतः प्रतिमासं प्रकाशितः चकास्त्येव। हिन्दीभाषा-माध्यमेन आर्यमहिला पत्रिका प्रकाशिता भवति। अनेके विद्यालयाश्च परिचाल्यन्ते। संस्थायाः कार्यकर्त्तारः विद्वांसः कर्मण्याश्च कार्यव्यापृताः सन्तः एतस्याः देव्याः तत्त्वावधाने तत्पराः वर्त्तन्ते।

जानन्त्येव भवन्तः अद्य धर्मस्य धर्माचरणस्य धर्मोपदेशस्य धर्मप्रचारस्य च महती आवश्यकता वर्त्तते। वयं मनुपुत्राः देवकार्यार्थमेव देहं धार-यामः। अयं मानवदेहोऽपि धर्माचरणस्यैव परिणामः। धर्मेण हीनाः पशुभिः समानाः भवन्ति। न वयं कीटा मर्कटाः वा ! इति मत्वा सन्नद्धैः भाव्य-

मस्माभिः धर्माभिरक्षणाय सक्षमतया ! धर्म एव अयं प्रभवति प्रयागे कुम्भे सर्वान् अस्मान् आक्रष्टुम् । द्रष्टव्यम् सर्वैः अस्मिन् दुर्दिने संकटापन्ने समये उपरि अवश्यायश्यामले अधस्तात् च कीचसंकुलेऽस्मिन् पुलिनप्रदेशे सार्द्रवस्त्रादिसंभाराः श्रद्धालवः भगवन्तमेव समर्पिताः धर्मस्य प्राभाव्यमेव भावयन्ति । इदमुदाहरणम् धार्मिकतायाः ! अयं दृष्टान्तः तत्त्वदृष्टेः ! पश्यन्तु वैदेशिकाः, अनुभवन्तु नास्तिकाः, विधमन्तु धर्मविद्रोहिणः, यतोधर्मस्ततो जयः इत्यास्मकं समुद्घोषः ।

वयं साधुवादैः, श्रीभारतधर्ममहामण्डलमभिषिञ्चामः । अभिनन्द्यते देवीजो महोदया शतशः । एतस्याः चरित्रेण विद्वांसोऽपि प्रभाविताः सन्तः धर्ममाचरन्ति ! वयमत्रागत्य संतुष्टा प्रसन्नाश्च स्मः । अस्याः संस्थाया उत्तरोत्तरमुत्कर्षं कामये प्रार्थये च भगवन्तम् धर्मसमृद्धये—

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्** ॥ इतिशम्

तदनन्तरं देवीजी महाभागया आभारप्रदर्शनपुरःसरम् श्रीमन्तः शङ्कराचार्याः पौन्यःपुन्येनाभिनन्दिताः पुनरागमनाय च प्रार्थिताः । शङ्कराचार्याणाम्, श्रीमतां ज्ञानानन्दमहर्षीणाम्, देव्याः, धर्मस्य च जयोद्घोषेण रोदसीं पूरयन्तः श्रोतारः हरहरमहादेवेति महाध्मानतया तेषां प्रास्थानिकं समुदाचारं सम्यक् समचरन् !

× × ×

सप्तदशाष्टादशोनविंशजनवरो १९७७ वासरेषु सम्पन्नेषु श्रीभारतधर्ममहामण्डलमहाधिवेशनेषु क्रमशः सनातनधर्म-शिक्षा-वेद-सम्बन्धिषु त्रिविधसम्मेलनेषु विविधानि मन्तव्यानि पारितानि बभुवुः ! विदुषां प्रवचनानि विशेषतः आर्यमहिलामहाविद्यालयप्राध्यापकानां महोपदेशकानां पं० श्यामविहारिशर्मणां पीयूषवर्षणतया सर्वे प्रभाविता आसन् । मानसमरालाह्वयेन व्यासमहोदयेनच दैनन्दिनं रामचरितमश्रावि ।

श्रीभारतधर्ममहामण्डलसंस्थापकैः स्वनामधन्यैः श्रीशैः ज्ञानानन्द-महर्षिभिरेव भारतीयानाम् आर्यमहिलानां हितसाधनसमीहया संस्थापितासीद् आर्यमहिला-हितकारिणी-महापरिषद् नामधेया एका निखिल-भारतस्तरविश्रुतार्ययोषितां संस्था । एषा श्रीभारतधर्ममहामण्डलोद्देश्यालवालान्तरालसेचनिका, आर्यमहिलामासिकपत्रिकाप्रवर्त्तिका संस्था सततं स्वधर्मपन्थानमपरित्यज्य सम्प्रत्यपि अनयैव देव्या परिचाल्यते ।

एतस्याः सुधासारवर्षिण्याः सौरभेयीस्वरूपायाः संस्थायाः अधिवेशनान्यपि कुम्भपर्वणि सम्पन्नानि समर्थतया । परमतपस्विनीनां मातृवात्सल्योल्लाससमुत्कर्षसुखस्वारस्यसंविधात्रीणां विद्यादेवीजीमहोदयानां साभाध्यक्ष्ये जनवरी १९७७ मासस्य एकविंशतितारिकायां महिला-सम्मेलनं समपादि । सभानेत्रीणां सम्भाषणानन्तरं, आर्यमहिलाश्रेयः साधकानि नैकानि मन्तव्यानि पारितानि बभूवुः ।

श्रीभारतधर्ममहामण्डलान्तर्गतपूरकरूपान्यसमितिसहयोगे सम्पत्स्यमानसहस्रचण्डीमखपूर्णाहुतिः जनवरीमासस्य चतुर्विंशतितारिकायां कृता । अयं सहस्रचण्डीपाठहोमात्मकः माङ्गलिको मखः जनवरीमासस्य चतुर्दशतारिकात आरभ्य चतुर्विंशतितारिकापर्यन्तं प्राचलत् । अस्य यज्ञस्य आचार्याः वेदविद्याविदां मूर्द्धन्याः श्रीमन्तः श्रीनाथमिश्रमहोदयाः विश्वान् वैदिकान् विधीन् सधर्मधिषणं सुखं समपादयन् ! समस्ता मखाधिवेशननिवेशनव्यवस्था च श्रीमद्भिः आचार्यप्रवरैः डॉ० परमहंसमिश्रैः सक्षमतया व्यधायि । अकारणकरुणावरुणालयायाः पराम्बायाः परमानुग्रहेण तीर्थराजे सम्पन्नमिदं समहोत्सवसमारोहमधिवेशनम् सुमनसां संप्रीतये प्रत्यूष इव सर्वेषां मङ्गलाय अभवत् ।

पावित्र्यमक्षुण्णं तिष्ठति। इत्यत कुलपावित्र्यरक्षा तस्य प्रवाहधारायाश्च स्थिरीकरणं उभयमपि पितृगणानां मुख्यं कर्तव्यम्।

जलस्य प्रवाहगतिस्तदैव स्थिरा भवति यदा भूमिगतिर्निम्नगा स्यात्, जलस्य च सदाऽनुकूल्यं स्यादिति। एवञ्च यथा जलवेगस्य विकर्षणशक्तिः निम्नगक्षितेश्चाकर्षणशक्तिरुभे अपि सम्मिलिते जलधारां स्थिरीकुरुतः। तथैव पितृगणा अपि यदा पुरुषं स्त्रियश्च पृथग् गोत्रोद्भवं प्राप्नुवन्ति तदैव आधिभौतिकसम्बन्धविशिष्टस्य कुलस्य नियतं प्रवाहं स्थिरीकर्तुं मर्हन्ति। यतो हि पितृगणानां स्वकर्तव्यानुष्ठाने परस्परविरुद्धगोत्रोद्भवावेव दम्पती साहाय्यमाचरतः।

अन्यतश्च वयोज्येष्ठायाः कन्यायाः परिणयनिषेधस्यापि इदमेव कारणम्, यद् आयुषा सह आधिभौतिकस्य बलस्यापि वृद्धिः परिपुष्टिश्च भवति। क्षेत्रस्य बीजाश्रयत्वात् क्षेत्रबलं यदि बीजबलादधिकं स्यात्तदा क्षेत्रात्मकस्त्रीधाराया एव प्राबल्यं भवेत्। पुरुषधारा च गौणो भूत्वा कालान्तरेण पुरुषसृष्टिव्यपेक्षया स्त्रीसृष्टिमेव वर्द्धयिष्यति। तत्कुलं पुरुषविहीनं भूत्वा स्त्रीप्रधानमेव भविष्यति। स्त्रियाः पुरुषायितत्वेऽपीयमेवावस्थेति पूर्वमेवोक्तम्। वयोज्येष्ठायाः कन्याया विवाहनिषेधविज्ञानत एव सिध्यति॥ ९७॥

प्रसङ्गतोऽन्यदप्याह—

**वर्णसङ्करो नेष्टः॥ ९८॥**

अनेन पूर्वोक्तरजोवीर्य्यशुद्धिविज्ञानानुसारेण वर्णसङ्करः शुभप्रदो न भवितुमर्हति यतो हि वर्णसाङ्कर्य्ये रजो वीर्य्यशुद्धिः खपुष्पकल्पैव। रजोवीर्य्यशुद्धिविरहात्। पूर्वोक्तस्य गुणसम्बन्धिनो भावसम्बन्धिनश्च मुक्तिप्रदस्य स्वाभाविकस्य संस्कारस्य विकाशो निरुध्यते, पितृगणस्य साहाय्यं च नासाद्यते। यतो हि पितृगणा रजोवीर्य्यशुद्ध्या, कुलपवित्रया संस्कारशुद्ध्या च विशेषतो मानवकुलमनुगृह्णन्ति। वर्णसङ्करी सृष्टिस्तु धर्मजसृष्टि[illegible]तयाऽपि अनिष्टकर्त्री। विशेषतश्च वर्णसङ्करीणां प्रजानां

नैमित्तिकपितृगणत एकपद एव सम्बन्धविच्छेदो भवति। उक्तश्च श्रीगीतोपनिषत्सु--

सङ्करो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः॥
दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।
उत्साद्यन्ते जातिधर्म्माः कुलधर्माश्च शाश्वताः॥ इति॥

वर्णधर्म्मे साङ्कर्य्यदोषापातेन कथमधर्म्मसंग्रह इति अन्यथाऽपि विवृणोति। वर्णधर्म्मसाङ्कर्य्यस्य स्वाभाविको भेदस्त्रिविधो ज्ञेयः। एकस्तु अन्य जात्या सह रजोवीर्य्यसंमिश्रणरूपः। द्वितीयो नीचवर्णताश्रयणम्। तृतीयस्तु नीचवर्णस्योच्चवर्णत्वग्रहणप्रयत्नः, इति त्रिष्वपि भेदेषु उच्चवर्णस्य नीचवर्णाश्रितानामाचाराणां ग्रहणेन केवलाया आधिभौतिक्या एव क्षतेः सम्भव इति सा व्यक्तिगा क्षतिः। यतो हि शूद्राचारिणो विप्रस्य पुत्रः पुनः शुद्धतरो ब्राह्मणो भवितुमर्हतीति अनया आधिभौतिक्या अपवित्रतया केवलमेकपुरुषावधिकैव सङ्करता आपततीति लघीयानयमपराधः।

नीचवर्णो यदोच्चवर्णत्वमात्मन आश्रयितुमिच्छति तदा अध्यात्मिकी अपवित्रता सम्वर्द्धते। यतो हि नीचवर्णगः पुमान् स्वोच्चाभिलाषोन्मादग्रस्तोऽवश्यं स्वसमाजाश्रितं समुदायं वा उच्चवर्णस्थपुरुषाचारान् पालयितुमागृह्णाति।

तत्र यथाकथमपि न्यूनाधिकभावेन उच्चवर्णीयानाचारान् स्वयमाचरन् अन्यैश्चाचारयन् यदोच्चवर्णश्रेणिम्प्रविशति तदाऽनेके दोषाः समुद्भवन्ति येन तद्व्यष्टिसमष्ट्युभयात्मनोर्महती मानसी क्षतिर्जायते। यतो हि सर्वाभ्योऽपि हानिभ्य आध्यात्मिक्या हानेरप्रतिमत्वस्य सर्वैरभ्युपगतत्वात्। शरीरक्षतिर्हि धार्मिकविवेचनया न तादृशी प्रबला संमता यथाऽध्यात्मिकी क्षतिः। बुद्धिमनोऽहङ्कारात्मकस्यान्तःकरणस्यावनतिर्हि गुरुतराङ्गीकृता वृद्धैः।

अन्यच्चेदमपि विमर्शनीयम्–यद् आधिभौतिकी क्षतिशक्तिर्हि तत्पुरुषावधिकैव तिष्ठति। आध्यात्मिकक्षतिप्रभावस्तु तस्या व्यक्तेः तदीयसमाजस्य वा शाश्वतिकीमेव हानिं विदधत् सर्वथा सर्वकालिकं पातकं तद्व्यक्तौ तदीयसमाजे चासञ्जयति। आध्यात्मिकोन्नतौ च साक्षात् बाधको भवति।

इत्येवमियं हि तस्य क्षतिः स्थिरा शाश्वतिकी गण्यते। यतो हि स आध्यात्मिक्यानयाऽपवित्रतया स्ववर्णतो विच्युतो भवति। उच्चवर्णाधिकारमपि नासादयति। उपरितश्च पितृगणानां साहाय्यबलमपि ह्लसति, येन तस्योन्नतिमार्गो निरुध्यते। इत्थञ्च वृथोच्चत्वाभिलाषो स मानवो मानवसमाजो वा स्वाचरणेन वर्णाश्रमधर्मशालिमानवसमाजे महान्तं विप्लवमुत्थापयति। ईदृशधार्मिकसामाजिकविप्लवहेतुर्भूत्वा स मानवो मानवसमाजो वा स्वभावविरुद्धं वृहदाघातमधिगत्य स्वावनतेरेव निदानतामेति।

अपरतश्च रजोवीर्य्यसाङ्कर्य्यत आधिभौतिकहानेराघातस्तु दुःसहो निश्चित एव। रजोवीर्य्यशुद्ध्या कथं पितृगणानामनुकम्पा समुदेतीति विस्तृतं विवेचितमेव पूर्वम्। समासतः पितृगणसाहाय्यात्मकेन दैवबलेन विरहिता साङ्करी प्रजा स्ववर्णधर्मसंरक्षणमार्गतो विच्युता स्वोन्नतिमार्गमेव निरोधयति। तथा च वर्णाश्रमधर्मसम्बन्धिनां सर्वेषामेवोन्नतमार्गाणामधिकारावाप्तये सर्वमपि क्षेत्रजातं तस्या व्यक्तेः तस्य वा समाजस्य कृते असुकरं सम्पद्यते इति ॥ ९८ ॥

अन्यथाऽपि विज्ञानमिदं पुष्णाति—

**स न धार्मिकः ॥ ९९ ॥**

वर्णसङ्करी प्रजा न धर्मानुगा भवतीति प्रत्यक्षत एवोपलभ्यते। साधारणतो जगति दृश्यतेऽपीदृग् यद् वर्णसङ्करीषु प्रजासु धार्मिकानुष्ठानस्यात्यन्ताभाव एवास्तीति।

पूर्वविज्ञानपरिपुष्टये एव सूत्रकारः सूत्रमिदमाविश्चकार। प्रथमतो हि वर्णसङ्करी प्रजा पूर्वकथितविज्ञानानुसारतो रजोवीर्य्यशुद्धिन्तु गोपायितुमेव नार्हति। साङ्कर्य्यां सृष्टौ यथायोग्याधिकारवतो वीर्य्यात्मकस्य बीजस्य यथायोग्याधिकारवतो रजोरूपस्य क्षेत्रस्य चाभावात् सृष्टिविपर्य्ययस्यावश्यकत्वात्।

द्वितीयतश्च मुक्तिसहायकस्य स्वाभाविकस्य संस्कारस्य गुणभावात्मकप्रवाहगतिर्नहि सुचारुतरा भवति। तृतीयतः कर्मबीजस्य संस्कारस्य संङ्करसृष्टौ दूषितत्वेनास्वाभाविकस्यापि संस्कारस्य तथात्वम्। यतो हि मातापित्रोरुभयोरपि स्वस्वजात्यभिमानस्य सुस्थिरत्वेन जैवस्यास्वाभाविकस्य संस्कारस्यापि परिशुद्ध्यभावः। इत्यादिकारणसमुदयात् सङ्करसन्तानस्य धार्मिकत्वसम्भावनाऽसम्भवः॥ ९९॥

तस्य कारणमभिधत्ते—

**नैसर्गिकी प्रवृत्तिरस्याधर्मे॥ १००॥**

संस्कारो हि कर्मणां बीजम्। यथासंस्कारमेव क्रिया समुत्पद्यते। वर्णसङ्करसन्तानस्योत्पत्तिवेलायां तदीयमातापित्रोरन्तःकरणे सदाचारभ्रष्टतायाः संस्कारस्तु अवश्यमेवान्तर्निगूढस्तिष्ठति—

आदित्यचन्द्रावनिलोऽनलश्च,
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये,
धर्मश्च जानाति नरस्य वृत्तम्॥

इति स्मृत्युक्तदिशा हृदयस्य सर्वनरवृत्तसाक्षित्वेन अन्तःकरणस्य चित्तात्मके भागे सदाचारभ्रष्टतारूपाधर्मसंस्कारोऽङ्कितो भवति। ततश्च मनोवायुवीर्य्याणां सामानाधिकरण्यसम्बन्धाश्रितत्वेन तेनैवाऽधर्मसंस्कारेण संवलितमेव गर्भाधानम्भवति। मातापि तेनैव संस्कारेण संवलिता गर्भभरणं करोति। अतश्च ततो जायमाना सृष्टिः स्वभावत एवाऽधर्म्मे प्रवर्तते इत्यत्र कः सन्देहलेशः॥ १००॥

प्रसङ्गतोऽन्यप्रकारेणापि प्रतिपादयति—

सृष्टिक्रमानतुकूलभावात् ॥ १०१ ॥

सृष्टेः सर्गस्य क्रम आरोहः तस्य, न अनुकूलम् अननुकूलम् तस्य भावः तस्मात् विपर्य्ययादित्यर्थः।

या हि क्रिया सृष्टिस्वाभाविकक्रमानुसारिणी तया धर्म्मोत्पत्तिर्भवति। या च सृष्टिक्रमविरोधिनी तया चाऽधर्मवृद्धिर्भवतीति धर्माधर्मयोरेतादृगेव सम्बन्धोऽभ्युपगतः पूर्वाचार्य्यैः। धर्माधर्मयोर्विस्तरशो विवेचितं लक्षणं पूर्वम्। तदनुशीलनतः स्पष्टमेव सिध्यति यत् मानवयोनितः प्राक्तनयोनिषु जीवः केवलस्वाभाविकसंस्कारपरवशो मानवाभिमानविरहितः प्रकृतेर्मातुः क्रोडे लाल्यमानः पाल्यमानः स्वस्वयोन्युचितधर्म्ममनुतिष्ठन् निर्बाधमाध्यात्मिक्यामुन्नतौ पुरःसरो भवति। तत्र तस्य जीवस्य क्रमाभिव्यक्तौ निरन्तरायमिदं कारणं यत् स स्वाहङ्कारविरहितः प्रकृतिनियमतः सृष्टिक्रमेणैव परिचाल्यते। यतो हि सृष्टिक्रमनियमतो गच्छतो व्यवहरतो वा जीवस्य क्रमोन्नतिरावश्यकी। अन्यत्र योनौ जीवस्तमोगुणावस्थातः क्रमशः सत्त्वाभिमुखो भवन् निर्बाधं तमो ह्रासयन् सत्त्वमभिवर्द्धयन् संसरति पुरः पुर उन्नतिमार्गे।

एवञ्च स्वाभाविकसंस्कारवशतः समेधमानो यदा मानवयोनावुपैति तदा तमोगुणाभिवर्द्धकैः पापकर्मभिस्तस्योर्ध्वगतिर्निरुध्यते सत्त्ववर्द्धकैश्च पुण्यकर्मभिः तदीयोर्ध्वगतिः सरला सुगमा सम्पद्यते। तमोवर्द्धकस्य कर्मण एवाधर्माभिधानात् सत्त्ववर्द्धकस्य च धर्मसंज्ञकत्वात् सृष्टेश्च क्रमशः जीवस्य तमोऽवस्थातः सत्त्वाभिमुखप्रापणैककर्मकत्वात् अवसाने च क्रमेण पूर्णसत्त्वोद्रेकात्मकमुक्तिपदप्रापणरूपान्तिमकर्तव्यत्वात् क्रमशः सत्त्वाभिव्यक्तिरेव सृष्टिनियमानकूलेति स्वयं सिद्धः पन्थाः।

वर्णसङ्करी प्रजा तु प्रत्यक्षत एवैतन्नियमविरुद्धा भवति। वर्णाश्रमधर्म्मश्च सृष्टिनियमसंरक्षणे साहाय्यमाचरति। तेन चेयमार्य्यजातिः सृष्टिनियमसंरक्षणप्रधाना आत्माभिमुखी क्रमशः कथमूर्ध्वगतिशालिनी

दमेधते इति विस्तरशो विमर्शितं पूर्वम् । इत्थञ्च सृष्टिनयमोल्लंघिनी वर्णसङ्करी प्रजा अधर्म्मप्रधानेति निःसन्दिग्धः सिद्धान्तः ॥ १०१ ॥

विज्ञानमिदमन्यथापि प्रमाणयति—

**श्राद्धव्याहतेर्यवनजप्रेतवत् ॥ १०२ ॥**

गर्भाधानवेलायां मातापित्रोरन्तःकरणसंस्कारेण सार्धं भाविनः सन्तानस्य कीदृक् घनिष्ठः सम्बन्ध इति निदर्शयितुं दृष्टान्तमुखेनाह—

कश्चन धर्माचार्य्यः संन्यासी कस्यचन सद्गृहस्थस्य ब्राह्मणस्य गृहे भिक्षाचर्य्यार्थमाहूतोऽतिथिरूपेण रात्रिमेकामुवास । रात्रौ च भोजनानन्तरं निद्रिते सन्यासिनि निशीथे कश्चन तद्गृहगः प्रेतो मनुष्यवेशगतः सन्यासिनं बोधयामास । सन्यासी तु तं चौरं मन्यमानो गृहस्थितान् पुरुषान् सम्बोध्य यावत् पृष्टवान्, तावत् तस्य प्रेतस्याट्टहासेन विस्मितो गृहस्थपुम्भिश्च बोधितोऽमुं तदीयवंशपरम्पराप्राप्तः कश्चन सम्बन्धी मृत्वा प्रेतयोनिमाश्रितोऽस्तीति निश्चिकाय ।

ततश्च स महात्मा दयावशंवदो भूत्वा स्वप्रभावातिशयेन तं प्रेतं तस्या योनेर्मोक्तुकामः विविधान् प्रश्नान् पप्रच्छ । स च तं महात्मानं स्वोपकारपरायणं बुध्वा स्वपूर्ववृत्तान्तं सर्वमेव निवेदयामास ।

तथाहि बद्धाञ्जलिः प्रेतो मुक्तकण्ठः तं सन्यासिनं विज्ञापयामास यन्मदीया माता कदाचन मार्गे गच्छन्ती केनचन यवनतरुणेन धर्षिता गर्भं दधार । पश्चाच्च लज्जापरवशा तद्वृत्तान्तं निगूहन्ती मां जनयामास । तेन गर्भेण गृहीततनुरहं सर्वमप्यायुर्यथाशास्त्रविधानं यापयमानोऽन्ते वार्द्धक्ये मृत्युपरवशः स्वसन्तानैः विहितान्त्येष्टिक्रियोऽपि प्रेतयोनिमुपेतोऽस्मि । न केनापि सनातनधर्मीयविधानेन प्रेतत्वं विमोक्तुमर्हामि । यदि श्रीमान्मदीयोर्ध्वगतिं चिकीर्षति चेदन्यमेव कञ्चनोपायं विरचयतु । इत्युक्त्वा तुष्णीं बभूव । स च सन्यासी श्रुततत्प्रेताखिलोदन्तोऽन्येनैव विधानेन तं प्रेतयोनिमुक्तं कृत्वा तदीयेन सकलगुप्तरहस्येन तं सद्गृहस्थं बोधयित्वा यथागतं जगाम ।

इत्यनेन सूच्यते—यद् यवनजनकवीर्य्यसंस्कारतः समागतो यवनसंस्कारो न केनापि सनातनधर्मशास्त्रविधानेन विमुक्तो भवितुमर्हति यथा तस्य यवनप्रेतस्य बभूवेति मातृपितृजन्यरजोवीर्य्यसम्बन्धयुक्तसंस्कारप्राप्तेरयमपूर्वो दृष्टान्तः ॥ १०२ ॥

पुनः प्रसङ्गतो वर्णशुद्धिमहिमानमाख्याति—

**वर्णविशुद्धया विवृद्धिर्धान्यवत् ॥ १०३ ॥**

पूर्वं वर्णाश्रमधर्मस्य महिमानमभिहितवान् विस्तरेण सूत्रकृत् महर्षिः। इदानीं रजोवीर्य्यशुद्धिविज्ञानप्रस्तावेन पुनस्तन्महत्वमुदीरयन् धान्योदाहरणमुखेन रजोवीर्य्यशुद्धिमूलकतां तस्य प्रख्यापयति।

कदाचन कालदुर्विपाकतो धरातलस्थिते सर्वस्मिन्नपि धान्ये विनष्टे सत्येकमपि यदि शुद्धतरं धान्यमवशिष्टं स्यात्तर्हि तेनैवैकेनापि धान्येन पुनः कालक्रमेण शनैः शनैः सर्वापि मेदिनी धान्यपूर्णा भवितुमर्हति। तथैव शुद्धरजोवीर्य्यप्रभावशालिनो स्वल्पाऽपि ब्राह्मण-क्षत्रिय-वैश्य-शूद्र वर्णाभिमानिनी प्रजाऽवशिष्टा स्यात्तर्हि कालान्तरे तत एव पुनः वर्णाश्रमाचारवतीभिरार्य्यप्रजाभिः सम्पूर्णाऽपि मेदिनी सम्भृता स्यादित्यत्र नाणुरपि सन्देहलेशः॥ १०३ ॥

इदानीं शुद्धित्रयस्याऽप्युपयोगं समाचष्टे—

**शुद्धित्रैविध्यमपेक्ष्यं धातुत्रयसाम्यवत् ॥ १०४ ॥**

आयुर्वेदानुकूलवातपित्तकफात्मकधातुत्रयसाम्यतो यथा शरीरस्य स्थितिः साध्वी नीरुग् निगद्यते तदन्तर्गो जीवश्चोन्नतो भवति,— तथैवाध्यात्मादिशुद्धित्रयेण संस्कारशुद्धिमासादयञ्जीवोऽभ्युदयनिःश्रेयसावपि विन्दति।

आयुर्वैदिकोऽयं सर्वविदितः सिद्धान्तो यद् वातपित्तकफानां त्रयाणामेकस्यापि शुद्धौ ह्रासश्चेच्छरीरे रोगाभियोग आवश्यकः। त्रयाणां समानशुद्धौ सत्यां न काऽपि शारीरिकी पीडा पुमांसं स्त्रियं वाऽऽक्रामति।

आयुर्वेदशास्त्रसम्मतोऽयमपि सिद्धान्तोऽस्ति यद् वातपित्तकफानां त्रयाणामपि समानशुद्ध्या नरो मुक्तिमप्यायासविरहितामेवाधिगच्छति। तथैव वर्णाश्रितां त्रिविधां शुद्धिमुपेत आर्य्यगणोऽभ्युदयमश्नुवानोऽन्ते निःश्रेयसमप्याश्रयति। तत्र वर्णधर्मनिर्वाहे शुद्धित्रयमध्ये एकस्या अपि ह्रासश्चेत्तदा तत्रन्यूनत्वस्यावश्यं सम्पातः। अतस्तिसृणामपि शुद्धीनां समानतयैवोपयोग आवश्यकः। स्मृतिष्वपि निर्दिष्टोऽयमुपरितनो विषयो यथा—

अभ्रकं तव बीजं तु मम बीजं तु पारदः।
उभयोर्मेलनं देवि! मृत्युदारिद्र्यनाशनम्॥
कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः।
सम्यग् योगश्च विज्ञेयो रोगारोग्यैककारणम्॥
रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता।
तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारणम्॥
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः। इति॥ १०४॥

विज्ञानमिदं पुष्यतितराम्—

**तद्वर्णाश्रमरक्षकं हिमालयवदैश्वर्य्यस्य ॥ १०५ ॥**

सूत्रकृद्धि महर्षिः पूर्वतनमेव विज्ञानमुदाहरणतः पोषयति। यथा हि नगाधिराजो हिमालयोऽखिलानामपि लौकिकैश्वर्य्याणां गोपायिता तथैवाध्यात्माधिदैवाधिभौतिकशुद्धित्रयमपि वर्णाश्रमिणां मानवानां सर्वस्याप्यभ्युदयकरस्य कार्य्यजातस्य रक्षितृ। हिमालयपर्वताश्रिताः एव धरातलस्थाः सर्वे उद्भिज्जाः प्राणिनः प्राणन्ति। केऽपि पशुपक्षिणो नालोक्यन्ते ये हिमालयस्य विशाले काये नाश्रयमाश्रित्य क्रीडन्ति। यथा हि पर्वतपतिः हिमालयः सुवर्णादिसर्वप्रकाराणामपि धातूनामाश्रयः, हीरकादीनां सर्वेषामपि रत्नानामाकरः, तथैव वर्णस्य त्रिविधाभिरपि शुद्धिभिः वर्णानामाश्रमाणां चोभयेषामपि धर्माणां शुद्धेः परिरक्षिता भवति। आर्य्यजातिश्च शाश्वतं जीवन्ती यज्ञादिस्वाभ्युदयकरान् धर्मान्

अनुतिष्ठन्ती स्वार्य्यत्वं सदातनमभिरक्षति। यज्ञादिशुभकर्मानुष्ठानेन देवर्षिपितृगणानामप्यभ्युदयः समेधते। वस्तुतः शुद्धित्रयेऽत्रैव सर्वमप्याश्रितं वर्णाश्रमधर्मस्येति विवेकः ॥ १०५ ॥

कथं गुणसंस्कारक्षय इति वर्णाश्रमंविज्ञानपरिपुष्टये प्रतिपादयति—

**गुणसंस्कारहानं परिणामात् ॥ १०६ ॥**

गुणसंस्कारविकाशस्य शरीरेण सह साक्षात् सम्बन्धः। तत्रापि गुणविकाशस्य स्थूलशरीरमेवाधार इति गुणसंस्कारेण सह स्थूलशरीरस्यैव सन्निहितः सम्बन्धः। इत्यत एव धर्माचार्य्यैर्जन्मनैव सह वर्णधर्मस्य घनिष्ठः सम्बन्धो निरूपितः। तथा च मनुः—

**अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।**
**प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ म. ९।३१७ ॥**

श्रीमता भगवतापि—

**अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुरिति।** निजमुखेनैव प्रस्तुतम्।

विज्ञानमिदमन्यथाऽपि बोद्धुं शक्यते। तथा हि-पूर्वजन्मार्जितप्रारब्धपरिणामतो जात्यायुर्भोगप्रकृतिप्रवृत्तिरूपपञ्चानां तत्त्वानामुपलब्धिर्भवति। तत्र तत्त्वपञ्चके त्रीणि प्रधानानि द्वे चाप्रधाने सम्मते। अत एव मुख्यगौणविचारणया प्रथमानां त्रयाणां स्थूलशरीरेणैव सन्निहितः सम्बन्ध उत्तरयोर्द्वयोस्तु सूक्ष्मशरीरेणैव नैकटिकः सम्बन्धः। अत्रापि गुणसंस्कार एव कारणम्। शरीरपरिणामेन सार्धं गुणसंस्कारस्य ह्रासः इति साधारणो नियमः।

अपरतश्च यावत्स्थूलशरीरस्थितिस्तावत् प्रारब्धजन्यगुणसंस्कारेण सार्धं जीवो दृढबद्धस्तिष्ठति। यदा च तस्य शरीरस्य विच्युतिर्जायते तदैव तस्मात् संस्कारात् पूर्णतया तस्य विमोको भवति।

उदाहरणतो यथा–सत्त्वप्रधानत्वेन ब्राह्मणस्य, रजःसत्त्वप्रधानतया क्षत्रियस्य, रजस्तमःप्रधानत्वाद्वैश्यस्य, तमःप्राधान्येन च शूद्रस्यैवं

चतुर्णामपि वर्णानां मध्ये क्षत्रियस्योदाहरणमाश्रित्यावगमनीयञ्चेदित्थम्—यथा क्षत्रियशरीरे रजःसत्त्वस्य यत् प्राधान्यम् वर्त्तते। तस्मादेव हेतोः तत्प्रभावो जात्यायुर्भोगप्रकृतिप्रवृत्तिषु च यदवलम्बते तस्यास्तित्वं जीवस्य सर्वास्वस्थासु कयापि विधया तिष्ठत्येव। केवलं परिणामत एव तस्य, ज्ञानं सम्पद्यते। इत्यत एव हेतोर्ब्राह्मणशरीरधारिणः क्षत्रियशरीरधारिणश्चावतारस्य, तथा ब्राह्मण-क्षत्रिय-शरीरधारिणोर्ज्ञानिनोश्चाचारव्यवहारयोर्महान् भेदः प्रतीयते। सर्वेऽपीमे संस्कारा यथायोग्यं यथासमयं परिणामत एव हीयन्ते॥ १०६॥

प्रसङ्गतः शङ्कासमाहिती ब्रूते—

**तल्लङ्घनमसाधारणनियमात्॥ १०७॥**

तस्य संस्कारस्य लङ्घनम् अतिक्रमणम् असाधारणनियमाद् भवतीति सूत्रार्थः।

ननु संस्काररहस्यस्यातिदृढतयाऽपरिवर्त्तनशीलत्वात् कथं विश्वामित्रस्य क्षत्रियशरीरस्यापि सतो ब्राह्मणत्वाभिसम्पत्तिः? कथं वा नन्दिकेश्वरो महात्मा मनुष्यशरीरस्य गुणसंस्कारेण विरहितो भूत्वा देवत्वमुपजगाम, कथञ्च परशुरामावतारो ब्राह्मणशरीरसम्पन्नोऽपि क्षत्रियत्वलक्षणसम्पन्नो बभूव? इत्यादि शङ्कायाः समाहिती सूत्रकृदभिदधाति। यद्—असाधारणतपःशक्त्या तथैव च योगशक्त्या तथाविधयैव वैदिककर्मशक्त्या चेदृशगुणसम्बन्धिनः संस्कारस्य परिवर्त्तनं भवितुमर्हति। तपसो माहात्म्यं हि सर्वश्रेष्ठं जेगीयते। सर्वोऽप्ययं संसृतिविलासस्तपःपरिणाम एवेति यजुर्वेदीयतैत्तरीयोपनिषदि—

"सोऽकामयत बहु स्यां प्रजायेयेति,
स तपोऽतप्यत स तपस्तप्त्वा—
इदंसर्वमसृजत यदिदं किञ्च,
तत् सृष्ट्वा तदेवानुप्राविशत्।"

एवमेवाथर्वणवेदीयमुण्डकोपनिषदि प्रतिपादितम्—

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात् प्राणो मनः सत्यं लोकाःकर्मसु चाऽमृतम्।

स्मृतावपि—

यद्दुस्तरं यद् दुरापं यद् दुर्गं यच्च दुष्करम्।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम्।

इत्यादि तपोमहिमा केन तिरोहितः।

एवञ्च महर्षेर्विश्वामित्रस्यामानवं तपश्चर्य्यं महात्मनो नन्दिकेश्वरस्यालौकिकं योगबलं, श्रीमद्भगवदवतारस्य श्रीपरशुरामस्य गर्भवासावतरणवेलायामेव दैव्या क्रियया वैदिकयज्ञीयचरौ वैशेष्याधानम्, सर्वमप्येतद् असाधारणनियमस्यैव जाज्वल्यमानो जागरूको दृष्टान्तः ॥१०७॥

इदानीमन्यादृशस्य संस्कारस्य सम्बन्धेऽपीदमभिदधाति—

**भावे स्वातन्त्र्यम् ॥ १०८ ॥**

गुणसंस्कारहाने यत्काठिन्यम् न तद्भावसंस्कारहाने आधिभौतभावस्याधिदैवभावे तस्याप्याध्यात्मभावेऽथवा परस्परं सर्वेषामप्येषामेकस्यान्यस्मिन् भावे संस्कारपरिवर्तनं सरलम्। सर्वमप्येतद्भावात्मकसंस्कारपरिवर्तनम् अभ्यासतः शनैःशनैः साधनेन सम्पद्यते। ज्ञानबलसाहाय्यमाश्रित्य तु द्रुतमेव सम्पद्यते। अशनायोदन्ये हि जीवानां प्रधानं जीवनावलम्बनम्। तच्च स्वीयं भोजनं 'ममेदं भोज्यमिति' बुद्धिं विहाय 'यद्दासि यदश्नासि यज्जुहोषि करोषि यत्, यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमिति' भगवदनुशासनानुरूपं श्रीमद्भगवते तदीयप्रसादबुद्ध्या ग्रहीतुं भगवद्भक्ताः चिराभ्यासतः संसाधयितुमर्हन्ति। एवं हि, मदीया स्त्री मद्भोग्येति, मतिमन्तर्धाय—

'स्त्रियः समस्ताः सकला जगत्सु।'

इति शास्त्रानुशासनानुकूलं कालान्तरेणोपासकाः सर्वास्वपि नारीषु ब्रह्मप्रकृतित्वधारणामेव स्थिरीकर्तुं क्षमन्ते। तद्वदेव तत्त्वज्ञानी पुमान्

स्वज्ञानबलसाहाय्यमाश्रित्य स्वशरीरेऽपि दृश्यबुद्धिमधिगच्छति। फलत आधिभौतिके आध्यात्मभावपरिवर्तनं प्रतिक्रियञ्च देवसम्बन्धस्थापनया आधिभौतिकभावे आधिदैविकभावपरिवर्तनं विदधाति। एवञ्च सर्वत्रैव सर्वस्यापि विनियमनं द्रुतमेव कर्तुमर्हति। तेन च प्रकृतिचक्रगतिं निर्बाधमतिक्रामन् मुक्तिपथं परिष्करोतीति ॥ १०८ ॥

पुरुषधर्मेण सह तेषां सम्बन्धं सूचयति—

**शक्तित्रयमपेक्ष्यं पुरुषे उद्भिद्बीजवत् ॥ १०९ ॥**

गुणपरिणामे भावपरिणामे चाशुतरं साफल्यावाप्तये त्रिविधभावशक्तिप्राप्तिरावश्यकी।

यथा हि—उद्भिज्जश्रेणि जीवेषु बीजात् फलोपलब्धये पृथिवीजलकालानां त्रयाणामेव शक्तिराकाङ्क्षिता, तथैव पुरुषाणामपि निःश्रेयसोपलब्धये त्रयाणामेवावश्यकत्वम्। स्त्रीजातेरभ्युदयनिःश्रेयसोपलब्धये या सुगमा सरला पद्धतिरपेक्ष्यते पुरुषाणां कृते तु सा दुर्गमा। इत्यत एव त्रिविधशुद्धिविचारः पुरुषधर्म्मे एव गृह्यते ॥ १०९ ॥

पुरुषधर्म्मरहस्यमुक्त्वेदानीं वर्णाश्रमधर्मरहस्यम्ब्रूते—

**एकेनान्यस्य योगसमापत्तिः ॥ ११० ॥**

केवलेन त्रिविधशुद्धिविवेकेन तु पुरुषवर्गस्याध्यात्मिकोन्नतिः सम्भाव्यते। परन्तु तस्यैवाभ्युदयनिःश्रेयसयोर्ध्रुवोपलब्ध्यै मानववर्गस्य चाधःपातनिरोधाय निश्चितमार्गमभिधत्ते।

यदा जीवो भावसंस्कारेण सह गुणसंस्कारस्य यथायोग्यं संयोगं कृत्वा उन्नतो भवति तदैवेदृशस्यालौकिकस्य सार्वजनीनस्य फलस्याधिगमो भवति। एतद्विज्ञानमूलकमेव वर्णाश्रमधर्म्मसंस्थापनमूहनीयम् ॥ ११० ॥

**वर्णधर्मेणैकस्य ॥ १११ ॥**

संस्कारसमापत्तिविचारणया वर्णधर्म्मो हि सर्वाभ्यर्हितः। यतो हि वर्णधर्मेण गुणसम्बन्धिनः संस्कारस्य सम्पादनं भवति। अदसीयं विज्ञा-

नन्नु पूर्वमेव निर्धारितम्—यद् रजोवीर्य्याभ्यां गुणसंस्कारः समाकृष्यते। भोगेन च तद्धानं भवति, हाने सति मुक्तिमार्गः सरलः सम्पद्यते।

वर्णधर्मस्याचारो हि एवंविधैरेव कौशलपूर्णक्रियासङ्घैः निर्णीतो विद्यते येन तदनुष्ठानतः स्वत एव गुणसंस्कारस्य भावसंस्कारसम्पर्कतोऽस्वाभाविकस्यांशस्य क्षयेण स्वाभाविकांशस्य चाभिव्यक्त्या च जीवो मुक्तिभूमिमारोहति ॥ १११ ॥

सम्प्रति द्वितीयस्य तदाह—

**आश्रमधर्मेणान्यस्य ॥ ११२ ॥**

वर्णधर्मस्य शक्तिरहस्यं पूर्वसूत्रे सम्यगभिधायेदानीमाश्रमधर्मस्य माहात्म्यं प्रख्यापयितुमाह। आश्रमधर्माचारसङ्घतो भावसंस्कारेण गुणसंस्कारसंम्पर्कः। वर्णधर्मः प्रवृत्तिरोधक आश्रमधर्मस्तु निवृत्तिपोषक इति पूर्वमप्यभिहितम्। वर्णधर्मतो गुणसंस्कारस्याश्रमधर्मतो भावसंस्कारस्य चाकृष्ट्या स्वत एव क्रमशो हानं भवति। ततश्च जीवः सर्वेषामेव संस्काराणां विलयनात्मकं निर्विकल्पस्वरूपमधिगन्तुं स्वत एवाग्रेसरो भवति। इत्यत एवाख्यातं जाबालश्रुतौ—

**ब्रह्मचर्य्यं परिसमाप्य गृही भवेत्।**
**गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् ॥**

अतश्च यो हि मानवस्तदीयसमाजो वा वर्णाश्रमधर्मं यथार्थतः परिपालयितुं बद्धपरिकरो भवति, तस्योभयोः संस्कारयोः सहैव सम्पर्कतया क्रमश आध्यात्मिकभूमौ क्रमाभ्युदयो निश्चित इति वर्णाश्रमधर्मस्यानिर्वचनीयमनुल्लङ्घनीयञ्च महत्त्वम् ॥ ११२ ॥

यद्येवं न स्यात्तर्हि किं भवेदित्याह—

**अन्यथाऽधःपातो निर्बन्धप्रवाहवत् ॥ ११३ ॥**

यदि कश्चन जिज्ञासुरित्थमाशङ्केत यद् यो हि मानवो मानवसमाजो वा वर्णाश्रमधर्मं नाङ्गीकरोति का स्यात्तदीयाऽवस्थेति—शङ्कामिमां समाधातुमेवेदं सूत्रमसूत्रयत्सूत्रकारः।

तथा हि–यथा सेतु बध्वा जलप्रवाह उद्गमस्थानात् गन्तव्यस्थानं यावत् प्राप्यते। परन्तु मध्ये सेतुभग्नतायां जलप्रवाहो विचलितो भूत्वा निम्नपथप्रसृतो नष्टभ्रष्टो जायते, न स प्रवाहः स्वगन्तव्यस्थानं प्राप्नोति, तथैव मानवसमाजस्य क्रमोन्नतिप्रवाहकृते सेतुस्वरूपो वर्णाश्रमधर्म्मो यस्मिन् मानवसमुदाये नाङ्गीक्रियते, स हि मानवसङ्घः कालान्तरेण धरातलादुच्छिन्नो नष्टभ्रष्टो भूत्वा स्वनामशेषमेव करोति।

स्वाभाविकस्य संस्कारस्य मुक्तिजनकत्वम् अस्वाभाविकस्य च बन्धननिदानतेति पूर्वमेव संसाधितम्। प्रथमतोऽस्वाभाविकस्य संस्कारस्य हानानन्तरं स्वाभाविकस्य क्रमविकाशो भवति, ततश्च क्रमशस्तस्यापि स्वाभाविकस्य हानेन गुणातीतं भावातीतमद्वैतं कैवल्यं पदं प्राप्यते। इयं हि मानवी क्रिया वर्णाश्रमधर्मस्वभावत एव सुतरां सम्पाद्यते। इत्यत एव वर्णाश्रमधर्मानुगा मानवजातिर्निर्बाधमेवाभ्युदयनिःश्रेयसाभिमुखी संसारयात्रामतिवाहयति।

ननु वर्णाश्रमधर्माभिमानिनी आर्य्यजातिः कथमधःपातमभ्याश्रयतीत्युत्तरयति—यथा हि सत्यत्रेताद्वापरकलियुगात्मकचतुर्युगानामभ्युदयः क्रमशः समेधते तथैव कालक्रमेणार्य्यजातिरपि रजोगुणबहुला जाग्रती सत्वाभिमुखी सम्पद्यते तदा हि तस्यां ज्ञानोद्यमशक्तिशान्त्यादिसमुन्नतानि लक्षणानि प्रकाशीभवन्ति। यदा च सा कालक्रमेण तमोगुणाच्छन्नाऽर्य्यजातिर्निद्राभिमुखी भूत्वा प्रमादालस्याज्ञाननिरुद्यमाशक्तिद्वेषाशान्तोर्ष्यानैक्यानुदारतादितमोगुणवृत्तिमधितिष्ठति स एवाधःपातस्तदीयो निगद्यते। यथा हि मानवो दिने जागर्ति रात्रौ च निद्राति तथैवार्य्यजातिरपि कालप्रभावतश्चक्रनेमिक्रमेण कदाचिज्जागर्ति कदाचन स्वपिति। परन्तु तस्या वर्णाश्रमपक्षपातिन्या आर्य्यजातेर्न कदापि नाशो रूपान्तरं वा भवति।

यस्यां मानवजातौ त्रिलोकपावनो वर्णाश्रमधर्म्मो न विद्यते रजोवीर्य्यशुद्धेर्भावशुद्धेर्वा क्रमो नास्ति, सा हि कालस्य कराळिकाया दुर्दमनीयाया वा गतेः प्रभावेण कालान्तरतोऽसभ्याऽनार्य्या भूत्वा नष्टभ्रष्टा विच्छिन्ना धरातल एव विलीयते।

स्मृतिरपि प्रमाणयति—

यतो वर्णाश्रमैर्धर्मैर्विहीना सर्वथा ननु।
असौ सृष्टिर्मानवानां कालिकायाः प्रभावतः॥
प्रकृतेर्मे लयं याति कुत्रचित्समये स्वतः।
धत्ते रूपान्तरं वासौ नात्र कार्य्या विचारणा॥ ११३॥

प्रसङ्गत आर्य्यजातेर्लक्षणमभिधत्ते—

**आर्य्यजातिरुभयोपेता॥ ११४॥**

उभाभ्यां वर्णधर्माश्रमधर्म्माभ्यामुपेता युक्ता आर्य्यजातिः ज्ञेयेति सूत्रार्थः। सर्वेषु मानवसङ्घेषु पूर्णावयवोपेतधर्माधिकारवत्या मानवजातेः श्रेणिद्वयम्। एकाऽर्य्यजातिः द्वितीयानार्य्यजातिरिति। तत्र यस्यां जातौ वर्णधर्मं आश्रमधर्मश्चेति द्वयोरपि धर्म्मयोरभ्युपगमः सा हि आर्य्यजातिः। मनुष्यजातौ जीवनमरणयोराध्यात्मिकशक्तेर्विद्यमानताभावयोर्यथा सन्निवेशस्तथैव वर्णाश्रमधर्मसम्बन्धोऽपि गुम्फितो विद्यते। एवञ्च तदनुकूलतया मानवजातेर्नामिकरणौचित्यचर्चायां वर्णाश्रमधर्माचारवत्या जातेरार्य्यजातिरिति पूर्वाचार्यैः कृता संज्ञा।

तथा च स्मृतौ—

"कर्तव्यमाचरन् काममकर्तव्यमनाचरन्।
तिष्ठति प्रकृताचारे स तु आर्य्य इति स्मृतः"॥

अपरञ्च—

येयं सदाचारवर्णाश्रमधर्मानुगामिनी।
सर्वस्वं मनुते वेदं सार्यजातिरिति स्मृतिः॥

निरुक्तकारो यास्कमुनिरपि "आर्य्य ईश्वरपुत्र" इति सञ्जगौ॥११४॥

इदानीं विरुद्धधर्म्मावलम्बिनीरन्यजातीर्लक्षयति—

**तद्विपरीताऽनार्य्या॥ ११५॥**

यत्र जातौ वर्णाश्रमधर्मो नाश्रियते सा हि अनार्य्यजातिरुच्यते। धरातलस्थासु अन्यमानवजातिषु पूर्वोक्तभयसम्भावनयैवाचार्य्यास्ता जाती-

आहुः। तादृशी अनार्य्यकोटिस्थिता मानवजातिर्बलैश्वर्य्याद्याधिभौतिकोन्नतिविचारणया कियतः कालस्य कृते महाप्रभावशालिनी स्यादपि, परन्तु कालान्तरेण तस्या रूपान्तरस्य विलयनस्य चावश्यम्भावमालोक्यैवानार्य्याख्यया तामाह्वयन्ति पुराणाचार्य्याः।

स्मृतावपि—

एतद्भिन्नाऽनार्य्यजातिः सदाचारविवर्जिता।
अन्यदप्येवमेवोह्यं नोच्यते विस्तृतेर्भयात्॥ ११५॥

जातिभेदप्रसङ्गेन मानवभेदमाह—

**मानवा देवासुरराक्षसास्त्रैगुण्यात्॥ ११६॥**

मनुष्यजातेः श्रेणिविभागं विधायाधुना महर्षिः सूत्रकारो लक्ष्यनिर्णयधिया मानवश्रेणीनां विचारपद्धतिमाह—

आर्य्यास्वनार्य्यासु वा जातिष स्वाधिकारानुरूपम् उत्तममध्यमाधमभेदेन त्रैविध्यमवश्यमूहनीयम्। आर्य्यजातौ जन्मग्रहणाभिमानेनाहङ्काराश्रयणेनोन्नतिपथो न निरुद्धः स्यादिति द्वयोरपि श्रेण्योः पुरुषो वा नारी वा स्यादुभावपि गुणत्रयभेदतस्त्रिविधां श्रेणिमाश्रयत एव। सात्त्विकौ देवश्रेणिगौ, राजसिकावसुरश्रेणिगौ, तामसिकौ राक्षसश्रेणिस्थाविति। श्रीमद्भागवते भगवद्वाक्यम्—

एधमाने गुणे सत्त्वे देवानां बलमेधते।
असुराणां च रजसि तमस्युद्धव! रक्षसाम्॥

अन्यत्रापि—

त्रिधा ज्ञेया नरा नार्य्यो भेदात्त्रैगुण्यगोचरात्।
भवन्ति पितरस्तेषु सात्त्विका गुणमोहिताः॥
राजसा रूपमुग्धाश्च तामसाः काममोहिताः।
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥ ११६॥

तेषां प्रवृत्तीराह—

परार्थस्वार्थपरोपकारपरतावृत्तिः ॥ ११७ ॥

सत्त्वगुणावलम्बी देवकोटिगो मानवः परार्थी, रजोगुणाश्रयोऽसुरश्रेणिस्थः स्वार्थी, तमोगुणाश्रितो राक्षसप्रकृतिकः परापकारपरायण इति त्रिधा मानवानां प्रवृत्तयो लक्ष्यन्ते। तत्र यः पुमान् या च नारी पराभ्युदयमङ्गलोन्नत्यादिभिः स्वात्मानं कृतार्थं सम्मन्वाते परकीयैहलौकिकपारलौकिकाभ्युदयसम्पादनैकपरा एव कालं नयतः ताविह देवदेवीशब्दवाच्यौ। यौ च केवलं स्वार्थपरायणौ स्वात्मन एव स्वार्थं सुखमभ्युदयं वा बहुमन्यते तावेवासुरसंज्ञाभाजौ। यौ च परापकारपरायणौ परेषामपकृत्याऽऽनन्दमश्नुवाते तौ राक्षससंज्ञकौ गर्हितौ मानवसमाजे हेयात्मानौ निगदितौ।

प्राक्तनाः पूज्या महर्षयः कीदृशाः पक्षपातशून्या विश्वजनहिताधायकाः समदर्शिन आसन्निति सूत्रस्वारस्यम्। अनयाऽऽर्य्यानार्य्यसंज्ञया पूर्वोक्ताकाट्यवैज्ञानिकयुक्तिसिद्धया कदाचन बुद्धिभेदमाश्रित्योभयोरप्यनयोर्जात्योरन्यतरस्या वाऽपकारप्रवृत्तिः समेधेतेति द्वयोरपि याथार्थ्यलक्ष्यस्थिरीकरणाय त्रिविधमानवश्रेणिरहस्यं प्राचीकशत्सूत्रकारः।

स्मृतयोऽप्यमुमर्थमनुधावन्ति—

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये,
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये,
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥

त्रिधाः प्रकृतयो नृणामुत्तमाधममध्यतः।
देवोऽसुरो राक्षसोऽथ गुणभेदेन गीयते ॥
आर्य्यानार्य्यासूभयासु सर्वत्रैवोपलभ्यते।
वर्तितव्यं प्रयत्नेन तत्प्रकृत्यनुशीलनात् ॥ ११७ ॥

आर्य्यजातेर्वैशिष्ट्यस्य मौलिकं सिद्धान्तं ब्रूते—

**गरीयस्त्वमियदार्य्यजातेः शुद्धित्रैविध्याद् ॥ ११८ ॥**

आर्य्यजातेः प्रतिष्ठानिदानं हि शुद्धित्रैविध्यम् । तत्र ज्ञानेनाध्यात्मिकीं शुद्धिं कर्म्मणाधिदैवीं शुद्धिं रजोवीर्य्यपावित्र्येण चाधिभौतिकीं शुद्धिं सम्पादयन्ती आर्य्यजातिस्त्रिविधामपि शुद्धिं समानतयैव प्रतिष्ठापयति । आश्रमधर्मगता शिक्षापद्धतिराध्यात्मिक्याः शुद्धेर्जागरूको दृष्टान्तः । वर्णधर्म्मीया आचारा आश्रमधर्मसम्बन्धिनश्च क्रियासिद्धान्तसमुच्चया आधिदैवीं शुद्धिं सम्पादयन्ति इति सर्वसम्मतो मार्गः । अपरञ्च जन्मनैव वर्णधर्मस्य दृढसम्बन्धभागित्वाद् आर्य्यनारीषु च आदर्शसतीधर्मस्य विद्यमानत्वाद् आधिभौतिकशुद्धिस्तु आर्य्यजातेरेव पैतृकी सम्पत्तिरिति नतमस्तकैः सर्वैरपि स्वीकरणीयमेव । कदाचिदार्यधर्मेतरेषु अन्यमानवकुलेषु वा आध्यात्मिक्या आधिदैव्या वा शुद्धेर्लक्षणं कियदुपलभ्येत नाम, किन्तु रजोवीर्य्यशुद्धिः सतीधर्मनिदानीभूताधिभौतिकी शुद्धिस्तु वर्णाश्रममर्य्यादापालनपरायामार्य्यजातावेवोपलभ्यत इति सर्ववादिविदितो वृत्तान्तः ।

इत्यतश्चैकस्मिन्नेवार्य्यजातिरूपाधारे त्रिविधाया अपि शुद्धेरुपलभ्यमानतया आर्य्यजातेर्महत्त्वं सर्वाभ्यर्हितमिति सत्यपरायणैरुदारैर्बुद्धिमद्भिरवश्यं स्वीकरणीयमिति ॥ ११८ ॥

आर्य्यजातेरपरं विशेषम्ब्रूते—

**श्लाघनीया देवानाम् ॥ ११९ ॥**

चतुर्दशसु भुवनेषु मृत्युलोकोऽयं चतुर्दशानामपि विभागानां चतुर्थो विभागः । अन्ये च सर्वेऽपि लोका भोगभूमय एव । ऊर्ध्वेषु सप्तसु देवभोगस्य निम्नस्थेषु च सप्तसु आसुरभोगस्य नरकप्रेतलोकयोस्तु दुःखभोगस्याधिकारपूर्णत्वात् तेषु लोकेषु कर्माधिकाराभावात् प्रधानतया तत्सम्पादनेनाभ्युदयनिःश्रेयससम्प्राप्त्यवसरानुपलब्धेः ध्रौव्यात् ते लोका न कर्म-

भूमय इति निश्चितम् । तत्रैवं सति मृत्युलोकस्य कर्मभूमित्वात्तत्रोत्पन्नायामार्य्यं जातौ स्वभावत एव त्रिविधशुद्धेः साहाय्योपलब्धेरियमार्य्यजातिरयमार्य्यावर्तदेशश्च देवानामपि श्लाघनीयौ ।

स्मृतावप्युक्तम्—

"गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥
कर्म्मण्यसङ्कल्पिततत्फलानि संन्यस्य विष्णोः परमात्मभूते ।
अवाप्य तां कर्ममहीमनन्ते तमालयं ते त्वमलाः प्रयान्ति ॥
जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्याः, ये भारते नेन्द्रियविप्रहीनाः ॥'

अन्यतश्च देवर्षिपितृरूपत्रिविधानामपि देवानां प्रसन्नतया सह वर्णाश्रमधर्म्मावलम्बिन्या आर्य्यजातेः कीदृशो घनिष्ठः सम्बन्ध इत्यस्य जाज्वल्यमानं प्रमाणं देवीमीमांसादर्शनम्, श्रुतयः स्मृतयः पुराणानि चोहनीयानि ॥ ११९ ॥

अन्यच्च—

देवसम्बर्द्धित्वमार्य्याणाम् ॥ १२० ॥

देवलोकसञ्चालका देवास्त्रिधा विभक्ताः सन्ति । तेषां त्रयाणामपि सम्वर्द्धनायोपाया अपि पृथगेव स्वातन्त्र्येण परिच्छिन्ना देवीमीमांसादर्शने परिगणिताः । तथा हि—"ब्रह्मयज्ञादिभिः प्रोजिता ऋषयः"

'देवयज्ञादिभिर्देवाः ।'
'पितृयज्ञादिभिःपितरः ।'

देवराज्यस्यावगतिस्तत्र विश्वासस्थैर्य्यम्, देवराज्यसञ्चालनसम्वर्द्धनाद्यनन्तरं विविधानां यज्ञमहायज्ञानामनुष्ठानम् इत्यादयोऽनेके देवप्रसादकरा गुणराशय आर्य्यजातौ विद्यन्त इति आर्य्यजातिर्देवलोकसम्वर्द्धनस्य प्रधानं निदानमिति सिद्धम् ॥ १२० ॥

अन्यमपि विशेषमभिवक्ते—

**धर्म्मपोषकत्वञ्च ॥ १२१ ॥**

वर्णाश्रमधर्म्मप्राणा आर्य्यजातिरेव वस्तुतो धर्मपोषिका। यद्यपि धरातलस्थिता अन्या अपि जातयो विभिन्नधर्म्मलक्षणशालिन्यो दृश्यन्ते, तथापि तासां धर्मस्वरूपस्य संकीर्णभावापन्नत्वान्न तासु साधारणधर्मस्य सर्वाण्यपि लक्षणान्युपलभ्यन्ते। नापि तासु विशेषधर्मस्यापि महत्त्वं प्रकाशितमासाद्यते। तासु चाध्यात्मिकज्ञानसंकीर्णतया आपद्धर्म्मा-साधारणधर्म्मयोरपि विज्ञानावगतेरभावः।

अन्यच्च विचारणीयोऽयं विषयो यद् आचारस्य पूर्णतायामेवाधेयः सर्वथा स्वस्थितिमासादयितुमर्हतीति। इत्थञ्च यस्या जातेः सामाजिकी शृङ्खला वर्णाश्रमधर्म्मात्मकदृढस्तम्भे निबद्धा, यस्यां जातौ रजोवीर्य्य-शुद्धिविवेकतो जातीयाधःपातपथोऽवरुद्धः, यस्याश्च जातेः सदाचारेषु आध्यात्मिकलक्ष्यपूर्णविचारणया अर्थकामापेक्षया धर्ममोक्षयोरेवादरः सदोपलभ्यते, यस्याश्च जातेः धर्म्मविज्ञानं साधारणासाधारणापद्विशेष-धर्म्मादिसर्वाङ्गपरिपूर्णं तस्याः जातेर्धर्म्मपोषकत्वे कः सन्देहः॥ १२१ ॥

प्रसङ्गसङ्गत्या जातिनिर्णयविज्ञानमाह—

**जातिनिर्णयो गुणसम्बन्धात् ॥ १२२ ॥**

वर्णाश्रमप्रसङ्गेन जातित्वस्य ततश्च आर्य्यानार्य्यभेदेन तदीय-विस्तारस्य च वर्णनं निशम्य यदि कश्चन जिज्ञासेत् चेद् यदन्यत्र जाति-निर्णयः कथं स्यादिति तत्रोत्तरमाह—गुणानां सत्त्वरजस्तमसां सम्बन्धात् जातेः सर्वविधायाः निर्णयो निश्चयो भवतीति शेषः।

यथा गुणविचारणया ब्राह्मणत्वजातेर्विज्ञानं विवृतम्, यथा च आध्या-त्माधिभौतलक्ष्यात्मकभेदलक्षणगुणभेदेनैव आर्य्यानार्य्योभयविभागो विहितः। इत्थमेव गुणविचारेण सर्व्वेष्वपि भूतसमुदायेषु जातिविभाग-निर्णयो भवितुमर्हतीति निःसन्दिग्धः पन्थाः॥ १२२ ॥

विज्ञानं परिपुष्णाति—

विधिदर्शनाच्च ॥ १२३ ॥

सर्वत्रैवेयं नियमपद्धतिः समुपलभ्यते यद् गुणसम्बन्धानुसारमेव स्थावरजङ्गमात्मकास्वपि सृष्टिसु जातिभेदः स्वीक्रियते। ज्योतिःशास्त्रादिषु समुपलभ्यमानो नक्षत्रग्रहादीनां ब्राह्मणत्वादिजातिनिर्णयः पुराणादिभिः क्रियमाणो देवतादीनां जातिनिश्चयः, पदार्थविज्ञानशास्त्रेण विधीयमानो रत्नादीनां जातिनिर्णयः, आयुर्वेदशास्त्रेण निश्चीयमान उद्भिज्जौषधादीनां जातिविवेकः, इमे सर्वेऽपि जातिविभेदा गुणभेदविवेचनयैव तत्तच्छास्त्रैर्विवेचिताः ॥ १२३ ॥

पुरुषधर्म्मसम्बन्धतः स्वाभाविकसंस्कारक्रमाभिव्यक्त्या पुरुषवर्गाणां मङ्गलवर्णनानन्तरम् इदानीं तत्सम्बन्धेन नारीजातेर्माङ्गल्यं विवेचयति—

नारीष्वपि माङ्गल्यं स्वाभाविकसंस्कारात् ॥ १२४ ॥

मूलप्रकृत्युदाहरणतो नारीजातीनां तदीयपूर्वप्रकृत्यनुरूपं स्वाभाविकसंस्काररूपेण पातिव्रत्यधर्म्म एव सर्वमङ्गलहेतुः यथार्य्यपुरुषेषु वर्णाश्रमधर्मः सर्वहितावायकस्तथैवार्य्यनारीषु पातिव्रत्यधर्मो मङ्गलकृत्।

मनुनाऽप्युक्तम्—

नास्ति स्त्रीणां पृथग्यज्ञो नो व्रतं नाऽप्युपोषितम्।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥"

सर्वाण्यपि दर्शनशास्त्राणि मूलपुरुषस्य मूलप्रकृतेश्च द्वैतप्रपञ्चे कारणतां समानतयैवाभ्युपगच्छन्ति। तत्र पुरुषस्यैव कस्मिंश्चिद् दर्शनान्तरे आत्मेति नाम, कुत्रचन पुरुष इति क्वचनेश्वर इति क्वापि ब्रह्मेति गीयते। सर्वत्रापि नामभेदे सत्यपि तस्य लक्षणमेकमेव यथा सर्वत्रोपलभ्यते, तथैव मूलप्रकृतिरपि केनचन प्रकृतिरित्यभिधीयते केनचित् ब्रह्मशक्तिरिति कैश्चन मायेति संज्ञायते। परन्तु सृष्टिविज्ञाने सर्वेऽप्यैकमत्येन मूलप्रकृतेर्मूलपुरुषस्य चोभयोरेव हेतुतामङ्गीकुर्वन्ति। तेनैव शाश्वतिकसत्यसिद्धान्तेन सृष्टिलीलायां सर्वत्रैव पुरुषधारा नारीधारा चेत्युभयविधापि धारा दृष्टिगोचरी भवति। यथोपलभ्यते मनुसंहितायाम्—

"द्विधा कृत्वात्मानो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥"

उद्भिज्जेषु आहो स्वेदजेषु उताण्डजेषु अथवा जरायुजेषु एवमेव दैवीषु सृष्टिषु मानवीषु वा सर्वत्रैव दाम्पत्यभावः परस्परं स्त्रीपुरुषभावो वा विद्यत एव । एवञ्च मूलसृष्टावेव पुम्भावस्त्रीभावयोरुभयोरपि सत्ताया विद्यमानत्वात् पुरुषेषु मूलपुरुषस्य स्त्रीषु मूलप्रकृतेः साहजिको भावः एव निगूढस्तिष्ठतीति किमत्र वक्तव्यम् । इत्यस्माद् हेतोर्मानवसृष्टौ पुरुषाः स्त्रीणामपेक्षया निःसङ्गाः स्वाधीनाः प्रातिभाव्यरहिता भवन्ति, स्त्रियश्च इतो विरुद्धलक्षणोपेता भवन्ति । इत्यनेनास्य सूत्रस्य तात्पर्य्यमिदं सिध्यति यत् स्वाभाविकसंस्कारस्य क्रमाभिव्यक्तितः पुरुषधारा क्रमशोऽभ्युदयमश्नुवती निःश्रेयसभूमिमधिगच्छति । तथैव नारीधारापि स्वभावानुकूलं स्वाभाविकसंस्कारमाश्रयन्ती तत्क्रमाभिव्यक्त्याऽभ्युदयनिःश्रेयसावधिगन्तुमर्हन्ति । पुरुषगणाश्च यथा वर्णाश्रमसदाचारादिना त्रिविधामपि शुद्धिं नियमतः समासादयन्तः क्रमशो मलविक्षेपाऽवरणादिविरहितां मुक्तिभूमिमुपतिष्ठन्ते । स्त्रियश्च तथैव वेदोक्तपातिव्रत्यादीन् स्त्रीजनोचितान् सदाचारान् प्रतिपालयन्त्यो निःश्रेयसपथपथिकाः सरलतयैव सम्पद्यन्ते ।

मूलप्रकृतिर्हि मूलपुरुषस्यैव कृते यथा परिणमते । पुरुषस्य निःसङ्गत्वे निष्क्रियत्वेऽपि तत्संयोगादेव सा सृष्टिक्रियां प्रवर्तयति । तस्यैव कृते सा स्वस्वरूपं स्थापयतीति सांख्यदर्शनोयं विज्ञानं प्रतिपादयति । तद्वदेव तस्यैव मौलिकस्य स्वाभाविकस्य संस्कारस्यानुरूप्येण पुरुषार्थं विदधती नारीजातिः स्वाभ्युदयमासादयितुमर्हति ॥ १२४ ॥

नारीषु स्वाभाविकस्य संस्कारस्य कथङ्क्रमाभिव्यक्तिरिति प्रतिपादयन्नाह—

**तास्वेकतत्त्वतपोभ्यां तदुपगमः ॥ १२५ ॥**

पूर्वोक्तप्रकारतोऽभिव्यज्यते यत् मानवजातिषु वर्णधर्माश्रमधर्म्मयो विविधानाचारान् प्रतिपालयन्ती पुरुषजातिर्यथा स्वाध्यात्मिकोन्नतिपथात्

पतिता नैव भवति, तथैव नार्य्योऽपि तपोमूलकैकतत्त्वमूलकान् सदाचारानवलम्ब्य स्वाभाविकान् संस्कारान् क्रमशोऽभिव्यञ्जयन्त्यो निःश्रेयसपदमपि विन्दन्ति, नैवाधःपातस्तासां क्वापि भवति। उक्तञ्च मनुना—

"कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु॥
आसीदामरणात् क्षान्ता नियता ब्रह्मचारिणी।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्॥
अनेकानि सहस्राणि कुमारब्रह्मचारिणाम्।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्॥
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्य्यव्रते स्थिता।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥"

इत्यत एव हेतोर्नारीणां कृते यावन्तः सदाचारा वेदशास्त्रादिषु प्रतिपादिताः ते सर्वेऽपि एकतत्त्वतपोमूलका एवोहनीयाः। एकस्मिन्नेव पुंसि रतिः, संसारे भर्तर्य्येव पुंस्त्वज्ञानम्। अन्यत्र स्वभर्तृव्यतिरिक्तेषु पुरुषेषु स्त्रीत्वबुद्धिः, स्वस्मिन्नेव पत्यौ लक्ष्यस्थैर्य्यम्, इमे सर्वेऽपि धार्मिकाः स्त्रीनियमा एकतत्त्वमूलका एव। अन्ये च ये गतिभ्रमणोत्थानोपवेशनाशनपानवस्त्रपरिधानपतिसेवाप्रभृतयः सतीधर्माः सन्ति ते सर्वेऽपि तपोमूलका ज्ञेया इत्यसन्दिग्धम्॥ १२५॥

प्रसङ्गतः सतीत्वविज्ञानं विस्पष्टयति—

**सतीभावप्राधान्यमतो नारीधर्म्मे॥ १२६॥**

महर्षिः सूत्रकारोऽधुना त्रिलोकीपावनस्य सतीधर्म्मस्य स्वाभाविकसंस्कारानुकूलमस्तित्वमार्य्यनारीष्वेव कथमधितिष्ठतीति विस्पष्टयन् प्रतिपादयति—यत् सतीधर्म्मे एकतत्त्वस्य तपसश्च प्राधान्याद् आर्य्यनारीषु सतीधर्म एवादर्शरूपः। सतीलक्षणस्य चातुर्विध्यं यत् पूर्वमुक्तम्, तत्र लक्षणेषु वर्णितायामुत्तमसतीधारणायां संयमकरणेन स्वत एव ज्ञायते यत् सत्या योषितोऽन्तःकरणं कीदृगेकतत्त्वधारणया परिपूर्णं भवति। तेषु

लक्षणेषु शास्त्रीयसतीधर्म्माचारादिषु च संयमादेतदपि स्फुटमेव परिलक्ष्यते यत् सतीधर्मस्तपोधर्मपराकाष्ठया परिपूर्ण इति ।

उक्तञ्च विष्णुसंहितायां—

"मृते भर्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा"

अथर्ववेदेऽपि—

"इयं नारी पतिलोकं वृणाना······धर्म्मं पुराणमनुपालयन्ती"

एतदपि विज्ञानसिद्धं यद् यासु जातिषु नारीणां पत्यन्तरग्रहणसंस्कारो हृदि विरूढस्तत्र जातिषु सतीधर्मस्यादर्शः कदापि नैव सम्भवति । आर्य्यजातिषु सतीधर्म्मस्य जाज्वल्यमानं विज्ञानमिदं सर्वैः सदानुभवनीयम् यन्नैवास्ति तत्र पत्यन्तरग्रहणस्य मानसोऽपि संकल्पः तदनुष्ठानं तु दूरेऽपास्ताम् ॥ १२६ ॥

प्रसङ्गतः शङ्कासमाधाने विवृणोति—

**भ्रष्टाऽपि योगिनी श्रेयोभाक् ॥ १२७ ॥**

धर्माचार्य्याः सर्वहितैषिणो विश्वजनीनहिताधायका आसन्, तैः प्रवर्तितः सनातनधर्मश्च सर्वजीवसंरक्षक इति निर्विवादम् । एवं सति यदि कश्चन धर्म्मजिज्ञासुरिदमाशङ्केत यत् स्त्रीणां कृते सतीधर्मस्यैव सर्वमङ्गलकरत्वे पूर्वजन्मार्जितकर्म्मवेगेन आहोस्विदन्येनैव केनापि विशेषकारणेन यदि काचन नारी स्वसतीधर्मादर्शतो विच्युता स्यात्तर्हि तस्या मङ्गलं किं न भविष्यति ? अघटनघटनापटीयस्या मायाया दुर्दमनीयेन प्रभावेण काचन योग्यतमापि नारी स्वसतीधर्मतो विच्युता स्याच्चेत्तदा तस्या अभ्युदयनिःश्रेयसयोः पन्था निरुद्धः स्यात् किम् ? इति प्रश्नस्योत्तरं ब्रूते परमकारुणिको महर्षिः सूत्रकारः ।

सर्वहिताधायकेऽस्मिन् सनातने धर्म्मे कस्यापि कदाप्यभ्युदयनिःश्रेयसौ नैव निरुद्धौ सम्भवतः । तथा हि कापि योग्या नारी दैववशात् क्वापि स्वादर्शसतीधर्म्मतो विच्युता स्यात्तदा सा योगिनी भूत्वा स्वाभ्युदयनिःश्रेयसावधिगन्तुमर्हति । कर्मिणोऽपि चरमे ज्ञानाश्रयेणैव मुक्तिमधि-

गच्छन्ति, उपासका अपि तथैवावसाने ज्ञानपथपथिका भवन्त्येव। यतो हि "ऋते ज्ञानान्न मुक्तिः" इति निराकुलः पन्थाः। यदि कापि नारी सतीधर्मोचितकर्मकाण्डमार्गतो भक्तिमार्गतो वा विरहिता दैवात् स्व-कर्तव्यभ्रष्टा भवेत्तदा योगमार्गावलम्बेन सावश्यं स्वाभ्युदयनिश्रेयसी सम्पादयितुमर्हतीति।

अत्रैतावानेव भेदो यत् सतीनां योषितां योगसाधनस्य प्रयोजनमेव नायाति। ता हि केवलं सतीधर्म्मप्रभावेणैव उच्चतरमपि सतीलोकमधि-तिष्ठन्ति। ततश्च ज्ञानाधिकारप्रधानां पुरुषयोनिमधिगत्य सरलतयैव पद्धत्या निःश्रेयसभूमिमारोहन्ति। स्त्रीणामयं नैसर्गिको भावः। अन्यथा ताः सद्गुर्वाश्रयेण योगमार्गावलम्बतोऽसाधारणधर्म्मसाहाय्येन निःश्रेय-समार्गाधिकारिण्यो भवन्तीति ॥ १२७ ॥

समाधानपरिपुष्ट्यै धर्म्मस्य सर्वव्यापकतां निदर्शयति—

**सा तु नैव सता रम्भावत् ॥ १२८ ॥**

सर्वजीवहितकारी सनातनो धर्म्मः कमपि विमुखं नैव करोति। अत्र विषये पौराणिकमेकमुपाख्यानमुदाहरति।

कस्मिंश्चित्काले कोऽप्यसुरराजः स्वर्गाधिपतिमिन्द्रं विजित्य नाका-धिराज्यमधितिष्ठन् रम्भानाम्नीमप्सरसं ग्रहीतुकामोऽभूत्। साऽप्सराः तु तस्यां रात्रौ तस्यासुरराजस्य भ्रातृपुत्रेण वृताऽसीत्। तदानीं सा स्वर्गीया वेश्या धर्म्मपथानुगतमसुरराजं प्रार्थितवती यदहमद्य धर्मतस्ते भ्रातृपुत्र-जायाऽस्मि नाद्याहं ते भोग्या श्वस्तव योग्या भाविनो तवाज्ञां शिरसा वक्ष्ये।

स्वर्वेश्याया अयं विचारस्तस्यै सुतरां धर्म्मावधायक आसीत्। यतो हि सा नारीधर्मादर्शरूपता सतीधर्म्मतो विच्युतापि असुरराजस्यामन्त्रणं धर्म्ममर्य्यादयैवास्वीचकार। अयञ्च सनातनधर्म्मस्य सार्वभौमभस्वसर्व-हिताधायकगौरवयोरुपयुक्तमुदाहरणम्। अन्यतश्च सतीधर्म्मश्चैको विशेषो धर्म्म इति कापि योग्या स्त्री तेन विशेषधर्म्मेण विरहिताऽपि साधारण-

धर्म्मबलेनापि स्वोन्नतिं विधातुं समर्था भवितुमर्हति । यतः साधारणो धर्म्मः सर्वजीवहितकारीति, सनातनधर्म्मस्येदं सार्वभौमं महत्त्वं न विस्मरणीयम् ।

अन्यथापीमं प्रकृतं विषयमवगन्तुमर्हन्ति जनाः । तथा हि स्त्रीणां सतीधर्म्मो विशेषधर्म इति सुसाध्यः सर्वमान्यो भयरहितश्चेति । योगिनोभावस्तु असाधारणो धर्म्म इत्यलौकिकः । इत्यत एवानेन सूत्रेण साधारणधर्म्मस्यैव महत्त्वमुद्घोष्यते ॥ १२८ ॥

प्रसङ्गतः सतीधर्म्मपद्धतिमाह—

**एकतत्त्वतपोभ्यां सतीलोकलाभः ॥ १२९ ॥**

इतः प्राक् स्वाभाविकसंस्कारस्य क्रमाभिव्यक्त्या नारीधर्मे मुक्तिमार्गः सरलो भवतीति निर्णीतम् । अधुनात्र शङ्केयं समुदेति यत् सर्वत्रैव वेदेषु वेदाविरोधिशास्त्रेष्वपि "ऋते ज्ञानान्न मुक्तिरिति" सर्वसम्मतः सिद्धान्त एवाङ्गीकृतः समुपलभ्यते, तत्कथं विरुद्धयोरनयोः मार्गयोः सामञ्जस्यं स्यात्, कथञ्च नारी सतीधर्मबलेनैव मुक्तिमपि लब्धुमर्हति ? इत्यादि शङ्काकलापं व्यपोहितुमेवास्य सूत्रस्यावतारः । तथा हि सत्यो योषितः उर्ध्वगतेरयमस्ति क्रमो यत् सत्याः तपःप्रभावेण स्वत एव पञ्चमलोकः सतीलोकः समुपतिष्ठते । तत्र च एकतत्त्वाभ्यासेन तस्या अन्तःकरणं योगयुक्तं भूत्वा ज्ञानार्जनक्षमं सम्पद्यते । ईदृशी धार्मिका सती शरीरपातानन्तरमवश्यं सतीलोकमुपसर्पति । यथोक्तं दक्षपराशराभ्याम्—

**व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।**
**एवमुद्धृत्य भर्तारं तेनैव सह मोदते ॥ १२९ ॥**

प्रसङ्गसङ्गतिसम्प्राप्तं शङ्कासमाधानमाह—

**पतिमयत्वात् पुरुषत्वम् ॥ १३० ॥**

ननु तृतीयलोकः स्वर्लोको वा स्यादन्योऽप्यस्मादूर्ध्वलोकः सतीलोको वा स्यात्सर्वेऽपीमे स्वर्लोकाः सुखभोगहेतुका एवेति सतीधर्मस्यापि स्वर्ग-

सुखभोजकत्वलक्ष्यकमेव सिध्यति। एवञ्चेदृशोर्ध्वगतिप्रदत्वेन सतीधर्म्मोऽभ्युदयप्रद एव भवितुमर्हति, न निःश्रेयसपदप्रदातेति शङ्कायाः समाहित्यर्थं सूत्रमिदमाह सूत्रकारः। तथा हि यथाऽन्ये कीटा भ्रमरातिनिदिध्यासात्तन्मयतामुपेत्य भ्रमरत्वमेवासादयन्ति तथैव सर्वोन्नतश्रेणिगा सती नारी स्वपतौ तन्मयतामुपेत्य पुरुषत्वमेवासादयति। यथोक्तं स्मृतिशास्त्रे—

सती सक्तो नरो याति सद्भावं ह्येकनिष्ठया।
कीटको भ्रमरं ध्यायन् भ्रमरत्वमवाप्स्यते॥

गीतोपनिषद्यपि—

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
तं तमेवेति कौन्तेय! सदा तद्भावभावितः॥

अन्यत्रापि—

कीटोऽयं भ्रमरीभवत्यतिनिदिध्यासाद्यथाहं तथा,
स्यामेवं रघुनन्दनोऽथ त्रिजटे! दाम्पत्यसौख्यं गतम्।
शोकं मा वह मैथिलेन्द्रतनये! तेनापि योगः कृतः,
सीता सोऽपि भविष्यतीति सरले! तन्मे मतं जानकि!॥

इति प्रथमतः पतितन्मयतैव नार्य्याः पुरुषत्वप्राप्तेर्निश्चितं निदानम्, द्वितीयतः शरीरत्यागवेलायां या हि भावना समुदेति तदनुसारिण्येवाग्रे मतिर्भवति। सती योषित् सहमरणधर्मानुरूपं चितायां पत्या सह भस्मीभवेदाहो पतिध्याननिमग्ना शरीरं जह्यादुभयथापि तस्याः पतितन्मयता विज्ञानसिद्धा। अन्यतश्च सतीलोकेऽपि भोगसमाप्त्यनन्तरं पुरुषत्वप्राप्तिर्हि दार्शनिकविज्ञानतःसिद्ध्यति। विशेषतः सतीलोकस्य ज्ञानमयलोकत्वात् तत्र ज्ञानप्रधानपुरुषदेहोपलब्धिर्न विज्ञानविरुद्धा, नापि तत्प्राप्त्यनन्तरं ज्ञानप्रधानपुरुषदेहोपलब्ध्या मुक्तिद्वारोद्घाटनेन तत्पदप्राप्तावपि सन्देहः। इत्यतः सतीधर्म्मपूर्णतया नारीणां निःश्रेयसोपलब्धिरिति सर्वसम्मतः सिद्धान्तः॥ १३०॥

पुरुषधर्मनारीधर्मयो रहस्यं यथाक्रमं प्रतिपाद्येदानीं सृष्टिरहस्यं ब्रूते—

परिणतिसत्तामयी प्रकृतिर्ब्रह्मवत् ॥ १३१ ॥

स्वाभाविको हि संस्कारो मुक्तिकारणम्, अस्वाभाविकस्तु बन्धन-कारणम् इति प्रागेव प्रतिपादितम्। स्वाभाविकसंस्काराश्रयेण पुरुषः स्त्री वा स्वाभाविकसंस्कारहानं कुर्वन्तौ कथं मुक्तिभूमिमुपतिष्ठेते इत्येत-दप्युक्तमेव। स्वाभाविको हि संस्कारो जीवोत्पत्तिकारणं स एव च मुक्ति-निदानम् इति कथं सृष्टिविज्ञानेनास्य सामञ्जस्यम्? इतिशङ्कायाः समुदय एव न स्यादित्याह। ब्रह्मप्रकृतेः स्वभावो हि परिणाममयः सत्तामयश्च, सा च ब्रह्मणः प्रकृतिरिति ब्रह्मवदेव ज्ञेया। उक्तञ्च प्रागपि यथा "अहं ममेतिवत्" ब्रह्मतत्प्रकृत्योरभेद इति।

विष्णुपुराणेऽप्युक्तम्—

शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥

ब्रह्मणः स्वरूपे सच्चिदानन्दानामद्वैतसत्ता यदा वर्वर्ति, तदा हि ब्रह्म-प्रकृतिस्तस्मिन्नव्यक्ततया लीना तिष्ठति। यदा ब्रह्मणः सकाशाद् ब्रह्म-प्रकृतिर्व्यक्ततामासादयति तदा सद्भावमवलम्ब्यैव परिणमते। तदेव प्रकृते र्व्यक्ताव्यक्तदशारहस्यम्। अतश्च प्रकृतिस्वरूपं यद्यपि सद्भावमयं त्रिगुणतरङ्गपरिणामि च तथापि ब्रह्मैव सेति निःसंदेहं ब्रह्मणोऽनाद्य-नन्तत्वादिलक्षणमवश्यन्तत्र विद्यत एवेति सुनिश्चितम्॥ १३१ ॥

सृष्टिपक्षे किमस्मात् सिद्धमिति ब्रवीति—

तस्मादनाद्यनन्ता जीवधारा ॥ १३२ ॥

यदा सद्भावमयी ब्रह्मप्रकृतिरनाद्यनन्ता त्रिगुणात्मकतया परिणा-मिनी चेति तत्स्वभावादेव सृष्टिलीलापि अनाद्यनन्ता। अतश्च जीव-धारापि अनाद्यनन्ता। अत्र नाणुरस्ति सन्देहो यद् ब्रह्माण्डपिण्डमयी व्यष्टिसृष्टिः सादिः सान्तेति स्वाभाविकसंस्कार उद्भिज्जदशायामुत्पत्ति-

शीलो जीवमुक्तिविधानसमये च लयशीलः। परन्तु धारारूपतो जीवसृष्टिरनादिरनन्तेति गीयते ॥ १३२ ॥

शङ्कासमाधाने अभिधत्ते—

**सादिसान्तत्वात्संस्कारस्य तन्मुक्तिः ॥ १३३ ॥**

अत्र यदि कश्चन जिज्ञासुराशङ्केत यद् ब्रह्माण्डपिण्डात्मकसृष्टिधारा तथा जीवधारा च अनादिरनन्ता चेत्तदा सृष्टिविनाशकस्य मुक्तिपदस्योदयः कथं स्याद् इति शङ्कायामिदं सूत्रम् । तथा हि—

इदं हि निसर्गसिद्धम् यत् संस्कारस्य स्वाभाविकत्वेऽस्वाभाविकत्वे वा सादित्वसान्तत्वाभ्यां जीवस्य मुक्तिरपि स्वभावसिद्धा। यदि कयाचिदपि युक्त्या यस्य पुंसः संस्कारसमूहो विनाशितः स्यात्तर्हि निर्बीजत्वात् तस्य महापुरुषस्य कृते कर्मसृष्टिरेकपदे एव निरुद्धा स्यादेवञ्च तस्य मुक्तिर्हस्तगतेव विज्ञेया। बीजाद् वृक्षोत्पत्तिं विधाय संस्कारनाशो विहितः स्याद्वाहोस्विद् भर्जितबीजवदेव संस्कारः शक्तिविरहितः सम्पादितः स्यादुभयथापि संस्कारविलये जीवमुक्तिरवश्यम्भाविनी ॥ १३३ ॥

विज्ञानं विस्पष्टयितुं संस्कारहानक्रममाह—

**कालतः संस्कारक्षयो बीजवत् ॥ १३४ ॥**

कर्मणो बीजस्य संस्कारस्य सादिसान्तत्वेन तस्य हानप्रकाराः कियन्तः सन्ति। तत्र प्रथमः प्रकारो यथा संसारे सर्वाण्येव तत्त्वानि कालेन विनाशमुपयान्ति तथैव संस्कारोऽपि कालकवलितो भवत्येव। जीवस्याविर्भावस्य स्वाभाविकत्वे तस्य विलयस्याऽपि स्वाभाविकत्वे कः सन्देहः।

बीजोदाहरणेऽपि सरलोऽयं पन्थाः यत् कस्यचनोद्भिज्जस्य बीजं महता प्रयत्नेन गोपायितं स्यात् तस्मिन्नङ्कुरोत्पत्तये नावसरः समुपलभ्येत तथापि बहुतरकालानन्तरं तस्याङ्कुरोत्पादनशक्तिरेव विनष्टा भवति, बहुत्र प्रत्यक्षत एवोपलभ्यते यदतिचिरन्तने बीजे कीटस्पर्शविरहितेऽ

प्यङ्कुरोत्पादनशक्तिर्नैवोपलभ्यते, नापि तस्य वापेनाङ्कुरोपलब्धिर्दृश्यते। एवञ्च स्वाभाविको हि संस्कारः स्वभावेनैव जीवानाविर्भाव्य क्रमशस्तानग्रेसरान् विदधदन्ते मुक्तांश्च कृत्वा स्वयमेव ह्रानमृच्छति।

स्वाभाविकेन संस्कारेणास्य विज्ञानस्य स्वाभाविक एव सम्बन्ध इति प्रागेव विवृतम्। यतो हि स्वाभाविकः संस्कारः केवलं कालमहिम्नैव स्वयं स्वाभाविकमेव परिणाममासादयन् अवसाने ह्रानमुपैति नान्या विधा तस्य विलयने।

इदानीमस्वाभाविकसंस्कारस्य सम्बन्धं विवृणुते। जीवस्य मुक्तिः सहजकर्मतो जीवन्मुक्तावस्थयाऽस्मिन्नेव काये भवेदुत जैवकर्मवशतः शुक्लमार्गेण सप्तमे लोके सम्पद्येताथवा ऐशकर्मप्रभावेणोन्नते देवाधिकारप्राप्तं प्राप्येत, सर्वत्रापि दशायां तस्य जीवस्य सञ्चितं कर्म तं विहाय ब्रह्माण्डप्रकृत्याश्रयेण कालान्तरे ह्रानमुपैति। एवञ्च जीवस्य बन्धनदशायामेकस्मिन्नेव जन्मनि कालप्रभावतोऽनेके संस्कारा विलयं गच्छन्ति। यथा च बाल्यकालिकः संस्कारो यौवने विनश्यति, तौ च जराजीर्णेन्द्रिये वार्द्धक्ये विलयं गच्छतः।

तत्त्वजिज्ञासूनां शङ्कापनोदायेदमाह–यत् कालमहिम्ना केवलं स्वाभाविक एव संस्कारो विलयमृच्छति। यतः कालसाहाय्येन जीवत्वस्योत्पादकः स्वाभाविकः संस्कारः कालमहिम्नैव जीवानुद्भिज्जावस्थातो मनुष्ययोनौ प्रापय्य पूर्णज्ञानाधिगमे च तान् मुक्तिपदं प्रापय्य स्वयमपि विलीनो भवति।

पुनश्च शङ्कते यज्जीवन्मुक्तावस्थामधिगते जीवे सहजकर्म्मणाऽपीयं दशा समुदेतुमर्हति? अत्रोदाहरणरूपत इदं ज्ञातव्यं यत् शुकदेवजनकशङ्कराचार्य्यप्रभृतयो जीवन्मुक्ता महात्मानोऽनेकविधान् अस्वाभाविकान् संस्कारान् बहुषु जन्मसु भुञ्जाना यदा जीवन्मुक्तपदप्रापके चरमे जन्मनि समुपस्थिता आसन्, तदा तेषां प्रारब्धसंस्कारा भोगात् समुत्पाद्य विलयं गता आसन्। तेषामस्वाभाविकाः संस्कारास्तु न मुक्तिबाधका अभूवन्। अपरतश्च तेषां स्वाभाविकाः संस्काराः ये च तेषां मनुष्यत्वप्राप्तौ विहृत-

गतय आसन् ते च पुनः सारल्यं जुषमाणाः विदेहमुक्तावस्थायां पूर्णतामुपेत्य विलीनाः सञ्जाताः। इयमीदृशी अन्ययोर्द्वयोर्मुक्तावस्थयोस्तयोः कथं सम्भवितुं शक्या। जीवन्मुक्तावस्थातिरिक्ते द्वे मुक्तावस्थे स्तः। एका ऐशकर्म्मप्रभावतो ब्रह्मादिदेवावस्था, द्वितीया च जीवकर्ममहिम्ना शुक्लमार्गेण सूर्य्यमण्डलभेदिनामवस्थेति।

तत्र प्रथमाया ब्रह्माद्यवस्थाया मीमांसा उदाहरणतो ज्ञेया। यथा—शास्त्रतो विज्ञायते—यत् भक्तकुलचूडामणिर्हनूमान् परस्मिन् जन्मनि ब्रह्मदेवपदे प्रतिष्ठितो भवितेति। ब्रह्मपदं हि ऐशकर्म्मणा प्राप्यते। तच्च जीवभावराहित्येन हेतुना सगुणब्रह्मपदत्वेनैव व्यवह्रियते। अत्र महावीरस्य हनूमतः पूर्वजन्मार्जितः प्रबलः शुभः संस्कारः, वर्तमानकालिकः सिद्धावस्थायां जायमानोऽलौकिकः शुभः संस्कारश्च, द्वावपीमौ सहभवौ तस्य प्रबलतपस्यायाः संस्कारात् प्रारब्धरूपेण परिणतौ सन्तौ तस्मै इमां महापदवीं प्रयच्छतः। अवशिष्टाश्च संस्कारा ब्रह्माण्डप्रकृतिमाश्रयिष्यन्ति। स्वाभाविकास्तु संस्काराः पूर्णतामुपेताः सगुणब्रह्मपदवीमुत्पादयिष्यन्ति।

एवञ्च जैवकर्मणा अत्युग्रतपोदानयज्ञादिसाहाय्यतः सप्तमे ऊर्ध्वलोके समुपेत्य सूर्य्यमण्डलं भिन्दन् शुक्लगतिसाहाय्येन शरभङ्गो महर्षिः भीष्मश्च पाण्डवपितामहस्तथाऽन्ये च यदा मुक्तिपदं प्राप्नुवन्, तदापीदमेवोदाहरणमवगमनीयम्। यच्छुक्लगत्युत्पादकः कश्चनोग्रोऽस्वाभाविकः शुभसंस्कार एवासीद्। स्वाभाविकश्च संस्कारस्तेभ्यो मुक्तिं वितीर्य्य हानमुपयान्ति मुक्तावस्थायाञ्च स्वाभाविकस्य संस्कारस्य जाज्वल्यमानमुदाहरणम् अस्य विज्ञानस्य पर्य्यालोचनया समुदेति॥ १२४॥

इदानीं द्वितीयं क्रममाह—

प्रतिक्रियातोऽङ्कुरवत्॥ १२५॥

संस्कारहानस्य द्वितीयस्तु क्रमोऽङ्कुरोत्पत्तिवज्ज्ञेयः। यथा हि एकस्माद्बीजादङ्कुरोत्पत्तौ सत्यां तरोरुत्पत्तिर्जायते बीजस्य च विनाशस्तथैव

संस्कारस्यापि स्वाभाविकोऽयं क्रमो यद् आत्मना क्रियोत्पत्तिं कृत्वा तदनु विनश्यतीति। ये हि संस्काराः समानश्रेणिगाञ्जात्यायुर्भोगान्समुत्पादयन्तः प्रारब्धरूपतामासाद्य क्रियां समुत्पादयन्ति, ते हि तज्जीवनस्वरूपाञ्जात्यायुर्भोगात्मकान् परिणामान्समुत्पाद्य तज्जीवनावसाने स्वयमपि हानमुपगच्छन्त्येव। गमागमचक्रस्य स्थैर्य्यसम्पादनसमयेऽस्मिन् मृत्युलोकेऽन्यासु वा भोगभूमिषु संस्कारस्यायमेव क्रमः प्राबल्येन प्रचलति। मोक्षदशायाः पूर्वोक्तप्रकारत्रयेऽपि जीवन्मुक्तगतौ, त्रिमूर्तिगतौ शुक्लमार्गदशायाञ्च प्रारब्धतः परिणमन्तः संस्काराः कथं विलयं व्रजन्तीति पूर्वसूत्रे साधु समाहितम् ॥ १३५ ॥

सम्प्रति तृतीयं क्रममभिधत्ते—

**अन्यतोऽपि कीटसम्पर्कवत् ॥ १३६ ॥**

संस्कारहानस्य तृतीयं क्रमं बीजकीटसम्पर्कोदाहरणत आह। यथा च कीटानुविद्धं बीजं नाङ्कुरोत्पादनायालम् तथैव केनापि स्वाभाविकेन हेतुना संस्काराणां क्रियोत्पादिनी शक्तिरेव विनाशिता स्यात्तदापि संस्कारहानमेव भवतीति ज्ञेयम्।

इतः प्राक् हानस्य क्रमद्वयं प्रतिपादितम्। तत्र कालाश्रयेण जायमानस्य हानक्रमस्य सम्बन्धः प्राधान्येन स्वाभाविकसंस्कारेण, तथा मुक्तात्मनो गत्वा सहैवावबोधनीयः। द्वितीयश्चाङ्कुरोत्पत्त्या जायमानः स्वाभाविकः क्रमो यो निगदितः, तस्य प्रधानतो बद्धजीवेन सम्बन्धोऽस्वाभाविकसंस्कारसम्बन्धतोऽवसेयः। अस्मिन् सूत्रे वर्णितस्तृतीयः केवलं मुक्तात्मना अस्वाभाविकेन संस्कारेण च सम्बध्नाति। फलतो मुक्तात्मनि अस्वाभाविकः संस्कारः कथं विलीनो भवतीत्येतन्निदर्शकमेवेदं विज्ञानम्।

मुक्तात्मसु ज्ञानाग्निना भर्जिताः क्वथिताः क्रियमाणाः सञ्चिता वा संस्काराः स्वाङ्कुरोत्पादिकां शक्तिमेवोन्मूलयन्ति। जीवन्मुक्तपदवीमधिगता अपि महात्मानः स्वाभाविकसंस्काराधीना निर्वासनाः सन्तो यत्

कर्म कुर्वन्ति न तेन कर्मबीजात्मका नूतनाः संस्काराः प्रादुर्भवन्ति। कदाचन प्रादुर्भवन्तोऽपि भर्जितबीजवदनुपयुक्ता एव भवन्ति। यथा हि—कीटानुविद्धं भर्जितं वा बीजम् अङ्कुरोत्पादिकया शक्त्या विहीनं भवति तथैव मुक्तात्मनां ज्ञानाग्निना दग्धाः क्रियमाणाः संस्कारा हानमेवच्छन्ति।

शङ्कासमाधानार्थमिदमभिधत्ते यथा भर्जितबीजादङ्कुरोत्पत्त्यभावेऽपि क्षुधार्त्तस्य क्षुन्निवृत्तिरन्नकार्य्यञ्च सिध्यत्येव, तथैव मुक्तात्मनां क्रियमाणा। संस्काराः कियतां क्षणानां कृते स्मृतिमुत्पादयितुमर्हन्ति। परन्तु चरमतो वासनाविरहितानां जीवन्मुक्तानां मनसि क्लीबत्वं जुषमाणे सति नैव क्रियमाणकर्माणि सृष्टिमुत्पादयितुमलम्भवितुमर्हन्ति, नात्राणुरपि सन्देहः। उक्तञ्च श्रीमद्भगवता श्रीगीतोपनिषदि—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन"।

अन्यत्राप्युपनिषदि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

छान्दोग्येऽपि—

नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य-
आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्त इति॥ १३६॥

प्रसङ्गतः शङ्कासमाधाने ब्रवीति—

## अनुष्ठानादः कर्मनिरासः॥ १३७॥

ननु मुक्तात्मन्येवान्यैरुपायैः संस्कारहानं सम्पद्यत इतिनियमे बद्धजीवानां कृते प्रायश्चित्तानुष्ठानादीनां कथं सार्थक्यम्? इति प्रश्ने समुत्तरयति—यद् अनुष्ठानादिना संस्कारक्षयो न भवति केवलं तदाघात एव व्याहन्यते। यदि प्रायश्चित्तानुष्ठानादिना संस्कारकर्मणोर्हानिसंभावना स्यात्तदेयमाशङ्का समुचिता स्याद् अत्र त्वीदृश्याः शङ्काया अवसर एव नास्ति। यथा हि युध्यतोर्गजयोर्मध्ये प्रबलस्यापि गज-

स्योन्मत्तगजेन पलायनं कारयन्ति, यतः स न कामपि हानिं विदध्यादिति। तथैवानुष्ठानादिकर्म्मणाऽन्यानि कर्माणि अपसार्य्यन्ते। तान्यशुभकर्म्माणि वस्तुतस्तु न नश्यन्ति किन्तु दूरीभूय तिष्ठन्ति। ते च संस्काराफलोन्मुखशक्तिविरहिता भवन्ति ॥ १३६ ॥

अन्यच्चाह—

असाधारणधर्म्मतोऽपि ॥ १३८ ॥

असाधारणधर्मस्यासाधारणशक्त्याऽपि एवंविधो निरासः सम्भाव्यते। असाधारणधर्मस्य लक्षणं तस्य विस्तृतं विवेचनं च प्रथमे पादे स्फुटं प्रतिपादितम्। पूर्वजन्मार्जितशुभकर्मवेगेन मनुष्ये यदाऽसाधारणयोगशक्तिः स्वत एवोदेति। तदा तेनासाधारणलौकिकशक्तिबलेनापि प्रायश्चित्तादिकर्मशक्तिसमुदाहरणानुसारम् असाधारणधर्म्माधिकारिणो स्त्री वा पुरुषो वा स्वकर्मनिरासं कर्तुं शक्नुतः।

राजर्षिर्विश्वामित्रोऽसाधारणयोगशक्त्या तपःशक्त्याश्च प्रभावेण एकस्मिन्नेव जन्मनि क्षत्रियत्वाद् ब्राह्मणतामधिगन्तुं समर्थो बभूव। अन्ये च क्रमद्रष्टारो महर्षयस्तं तथैवाङ्गीचक्रुः। तथैवाऽसाधारणधर्म्माधिकारी पुमान् कर्मनिरासं कर्तुं शक्नोति। असाधारणशक्तिसंस्कारं परिवर्तयन् महर्षिर्विश्वामित्रो यदेकपदे एव क्षत्रियसंस्कारं व्यावर्तयन् क्षत्रियशरीरञ्च ब्राह्मणपरमाणुभिः सम्भृतं चकार, तदसाधारणधर्मतः संस्कारपरिवर्तनस्य प्रबलमुदाहरणम्। तथैव नारीवर्गेऽपि द्रौपद्या उदाहरणमूहनीयम्। साधारणस्त्रीवर्गे तु कदाप्येवं न सम्भवति, यदेकस्मिन्नेव जन्मनि पञ्चानां पुरुषाणां पतित्वेन स्वीकृतावपि सतीत्वधर्मस्यादर्शस्तत्र तिष्ठेदाहो बहुभिः पुरुषैः सह सम्बन्धकरणेन सतीत्वपोषकः संस्कारश्च स्थातुमर्हेत्। परन्तु सर्वमप्येतद् द्रौपद्यां साधु निःसन्दिग्धमासीत्। यतो हि आदर्शपतिव्रता द्रौपदी स्वपूर्वार्जिततपोमहिम्ना स्वालौकिकेन योगशक्तिप्रभावेण च द्वाभ्यामेव मासाभ्यां स्वान्तःकरणसंस्कारराशीनपरिवर्तयितुं समर्था भवति स्म। स्वालौकिकयानया शक्त्या

